श्रीशिवाभ्यां नमः ।

ओं नमस्सामवेदाय ।

# ॥ सामसारसर्वस्वम् ॥

मन्त्र ब्राह्मण श्रौतगृह्यसूत्र प्रातिशाख्यादि
नवत्यधिक ग्रन्थानां विषय संग्रहात्मकम् ।

संपादकः

चतुरधिकशत प्रबन्ध निर्माण चातुरीधुरीण परशिवा
परावतार श्रीमदप्पय्यदीक्षितेन्द्रान्ववाय संभवः
उदयादित्यमङ्गलं सलक्षणविचक्षण
महालिङ्ग दीक्षित तनूजः धर्मज्ञ
विद्यावाचस्पत्यादि विरुद
भूषितः मायूरं
**म. रामनाथदीक्षितः**

इदं किल

**भारतराजकीय विद्याविभाग धन साहाय्येन**
**मुद्रापितं सत्विजयतेतमाम्**

परिधावि भाद्रपद शुद्धद्वितीया

Sri Sivabhyam Namah

# SAMASARASARWASWAM

By

Vidyavachaspathy, Dharmagna

**Mayuram M. RAMANATHA DIKSHITAR**

Published with

The Financial Assistance of the Ministry of Education,

Government of India, New Delhi.

Printed at

RAMAYANA PRINTING WORKS,

MADRAS.-4

## विषयसूचिका

मुद्रा

श्रीमत्परमहंस परिव्राजकाचार्यवर्य श्रीमच्छङ्करभगवत्पाद-प्रतिष्ठित श्रीकाञ्ची कामकोटि पीठाधिप जगद्गुरु श्रीमच्चन्द्रशेखरेन्द्र सरस्वती श्रीपादादेशानुसारेण श्रीमज्जयेन्द्रसरस्वतीश्रीपादैः मायूरक्षेत्राभिजनमहालिङ्गदीक्षितकुमार धर्मज्ञब्रह्म श्रीरामनाथ-दीक्षितविषये क्रियते नारायणस्मृतिः ।

सामवेदसंबन्धिग्रन्थेषु परिश्रमवता भवता रचिते साम-सारसर्वस्वनामके ग्रन्थे सामवेदमहिमा तच्छाखाभेदाः मन्त्र-भागविभागः, तत्तद्भागप्रपाठक-खण्डर्कसंख्यायुतः, ऊहगान-प्रकाराश्च स्पष्टतया प्रतिपादिताः ।

विशिष्य ताण्ड्य-षड्विंश-सामविधानाऽऽर्षेयदेवताध्याय-ब्राह्मणानाम् , छान्दोग्योपनिषदः द्राह्यायणानुपदनिदानादिश्रौत-सूत्राणाम् , गायत्रविधान-फुल्लसूत्रादिलक्षणग्रन्थानाम् , नारद-गौतमादिप्रणीतशिक्षाग्रन्थानाम् , खादिरगृह्यसूत्रस्य, गौतमधर्म-सूत्रस्य, श्रौत-स्मार्तप्रयोगग्रन्थानां च प्रमेयाः संग्रहेण निर्दिष्टा विद्यन्ते । गीर्वाणभाषापरिचयरहितानमपि सुलभबोधाय हिन्दी-भाषया आङ्गलभाषयाचानुवादः कृत इति च विशेषः ।

सर्वेऽपि सामगाः एतदुत्तमग्रन्थसाहाय्येन सामवेदग्रन्थ-प्रमेयान् जानन्तः, यथाधिकारं कर्माण्यनुतिष्ठन्तश्च वेदस्वरूप-भगवदनुग्रहात् सर्वाण्यपि मङ्गलान्यवाप्नुयुः इति ।

भवांश्च उपर्युपर्येवंविधग्रन्थरचनेन वैदिकलोकस्योपकुर्या-दिति चाऽऽशास्महे ।

श्रीकाञ्चीक्षेत्रम्
परिधाविमाद्रपदशुद्धप्रथमा

नारायणस्मृतिः

मुद्रा

श्रीमते वेदान्तरामानुजमहादेशिकाय नमः ।
श्रीमते श्रीरङ्गनाथमहादेशिकाय नमः ।
श्रीमते श्रीनिवास महादेशिकाय नमः ।
श्रीमते वेदान्तरामानुज महादेशिकाय नमः ।
श्रीमते पादुकासेवक रामानुज महादेशिकाय नमः ।
श्रीमते श्रीनिवास महादेशिकाय नमः ।
श्रीरङ्गनाथ दिव्यमणिपादुकाभ्यां नमः ।

श्रीमत् (तत्कालवासस्थानं)
श्रीरङ्गम् आण्डवन् सन्निधि मयिलाप्पूर, मद्रास
20-9-72

मायूरक्षेत्राभिजन धर्मज्ञ श्रीरामनाथदीक्षित विषये क्रियते श्रीरङ्गनाथदिव्यमणिपादुका स्मृतिः ।

भवद्भिः प्रेषितः सामवेदसारसर्वस्वनामको ग्रन्थः सम्यक् आपादचूडं अवलोकितः "सामवेदप्रशंसा, शाखाभेदाः मन्त्रभागः सप्त गानानि, प्रकृतिसामसंख्या, ऊहविषयकविचारः, मन्त्रब्राह्मण-भागभेदाः, प्रकृति विकृति भावः, ताण्ड्यो क्तायागाः, षड्विंश ब्राह्मणे विषयाः, वेदाङ्गानि, सूत्रभेदाः, फुल्लसूत्रं, शिक्षाग्रन्थभेदाः, श्रौतस्मार्तप्रयोगग्रन्थाः, एवमादयः विषयाः सम्यक् प्रतिपादिताः, अयं ग्रन्थः सामगानां महते उपकाराय प्रभवेदिति विश्वसिमः ।

अस्य ग्रन्थस्य साहाय्येन छन्दोगास्सर्वेऽपि सामवेदप्रमेयान् ज्ञात्वा कर्माणि स्वकीयानि अनुतिष्ठन्तः भगवत्प्रसादं लब्ध्वा श्रेयांसि लभेरन्निति प्रत्येमः ।

भवन्तश्चदीर्घायुषो भूत्वा एतादृशग्रन्थनिर्माणेन भूयोपि वैदिक लोकोपकारकाः भगवदनुग्रहेण सकलश्रेयसां निधयो भूत्वा भूमौ अनुपमाः विजयन्तां इति आशास्महे ।

मद्रपुरी
परिधावि कन्या
शुक्लद्वादशी

श्रीरङ्गनाथदिव्यमणिपादुकास्मृतिः

## FOREWORD

BY

## Dr. V. RAGHAVAN, M.A., Ph.D.,

Sri Mayuram Ramanatha Dikshitar needs no introduction to the *Astika* public of South India; in recent years, he has travelled in the north upto Nepal, participated in *Veda Sammelans* in the leading centres, like Delhi, Calcutta and Bombay, so that he is now well known to the world of Sanskrit and Vedic scholars and to the *Samavedins* particularly all over the country. He is not only foremost in the singing of Samaveda, in its *Kauthuma* School, but is also one of the best scholars and authorities in *Sama-lakshana* and can deliver goods on any matter relating to the whole *Saman*-tradition, the *Samhita* and *Gana*, the *Brahmanas* and the rites, the technique of *Saman*-singing and the basic and exegetical literature of *Sama Veda*.

In 1962, Sri Dikshitar produced a work in Tamil called *Sama Veda Sarvasvam*, giving in a handy volume everything about the *Sama Veda* and its accessories. It was a necessary publication, as even those dealing with such material get bewildered by the plethora of names and classifications. The usefullness of that publication was however confined to the Tamil-reading public; threrefore, it was a welcome undertaking of the author when he set himself to produce a Sanskrit work presenting a comprehensive account of *Sama Veda* in all its aspects. The task is accomplished in about 200 pages. Sri Diksitar's mastery of the whole *sampradaya* is clear in the precise, clear and brief descriptions given under each head in this book. For widening its use, he has added English and Hindi summaries of the book.

As a Kauthuma Samavedin myself, I had always been taking interest in the work and activity of the author. The author is a scion of the great Sanskrit polymath of Tamilnad, the blessed Appayya Dikshitar, twelfth in descent from him as the geneology appended at the end bears out. Apart from being a leading authority on his Veda, the Saman, he is well grounded in *Advaita* and an exponent of the Puranas, especially of *Devibhagavata*. I have great pleasure in congratulating him on his work and in wishing that, with the blessings of Almighty and His Holiness Sri Sankaracharya of *Kanchi Kamakotipitha*, he well enjoy long life and continue his work for the preservation and propagation of Sama Veda.

V. RAGHAVAN



श्रावण्यां श्रवणे जातः पूर्वं हयशिरा हरिः।
जगाद साम वेदं तु सर्वकल्मषनाशनम्॥

निर्णयसिन्धौ कल्पतरुः

श्रीशिवाभ्यां नमः ।

# ।। भूमिका ।

चन्द्रशेखर योगीन्द्र सरस्वत्यंघ्रिपंकजम् ।

संप्रणम्यप्रवक्ष्येऽहं साम सर्वस्वभूमिकाम् ।।

अस्ति तावन्मोक्षो नाम पुरुषार्थेष्वन्यतमः परमरुषार्थः, तदुपाय-स्तत्त्वसाक्षात्कार इति "तमेवं विद्वानमृत इह भवति, नान्यः पन्था विद्यते-ऽयनाय" इति श्रुत्याऽन्वयव्यतिरेकाभ्यां निरूपितः ।

तत्वसाक्षात्कारावबोधकं च महावाक्यमिति प्रसिद्धम् ।। महावाक्यस्य अनाद्यविद्यातत्कार्यकाम कर्मभिरनवरत अनवधिकदुःखमनु-भवतोजीवस्य अखण्डानन्द ब्रह्मैक्यावबोधजनकत्वात् । तत्र तत्वमसीति महावाक्यं इदानीमेव जीवो ब्रह्मैवेति बोधयति असि पदघटितत्वात् ।। अत एव तस्योपदेशरूपत्वमपि स्पष्टं प्रतीयते ।

तादृशमहावाक्य गर्भिता छान्दोग्योपनिषत् सामवेदीयकौथुम-शाखान्तर्गता । अत एव भगवतास्वविभूतित्वेन "गीयते वेदानां सामवेदोऽस्मि" इति गीतायाम । अपि च अध्यात्मविद्या विद्यानामिति आत्मज्ञानस्य भगवद्विभूतित्वं स्मर्यते । तादृश ज्ञानेनैव श्रैष्ठ्यं विप्राणा-

मिनि स्मृत्यन्तरे दृश्यते। "विप्राणां ज्ञानतः श्रैष्ठ्यमिति" अत एव बृहदारण्यके श्रूयते "अमौनं च मौनं च विदित्वाऽथब्रह्मणः" इति। एवमात्मज्ञानात् प्राप्तप्राशस्त्यस्याग्रजस्याविर्भावकारणत्वेन श्रूयते सामवेदः "सामवेदो ब्राह्मणानां प्रसूतिः" इति।

एवमादिमदम्पत्योः पराशक्ति परमेश्वरयोः स्वात्यन्तप्रियत्वेन स्मर्यते "साम प्रियः स्वरमयः" सामगान प्रिया इति। सामगान प्रिया इति ललिता नामात्मकस्य पदस्य व्याख्यामेवमकार्षुः भास्कराचार्याः। साम गायन्तीति-सामगाः-छन्दोगाः ते अनवत् (प्राणवत्) प्रियाः यस्याः सा-इति अतः तस्याः स्वप्राणसमत्वं सामाधीतिनामुक्तम्। किञ्च यज्ञेषु प्रयुज्यमानेन गुणिनिष्ठगुणाभिधानात्मक स्तोत्र रूपेण सामगानेन देवताप्रीतिर्जायते प्रीताश्चदेवताः यजमान मनोरथं पूरयन्तीति फलप्राप्त्यव्यवहितपूर्वत्वं सामवेदस्य श्रूयते। अतः देवताह्वान हविः प्रदान पर ऋग्वेदयजुर्वेदापेक्षया सामवेदस्य यज्ञेष्वन्तरङ्गत्वमपि गम्यते। अत एव श्रूयते "अयज्ञो वा एषः योऽसामा" इति।

अपिच ऋग्वेदे

| | |
|---|---|
| अंगिरसां सामभिस्तूयमानाः | ऋ—1—107—2 |
| अंगिरसो न सामभिः | ऋ—10—78—5 |
| उभे वाचौ वदति सामगाइव<br>उद्गातेव शकुने सामगायसि | ऋ—2—43—1—2 |
| यो जागर तमु सामानि यन्ति | ऋ—5—44—14 |

अत्राद्ययोरंगिरसां साम्नः प्राशस्त्यं, मध्यमयोः गानप्राश स्त्यस्योदाहरणं साम गानं, अन्त्येच जागरण शीलं अज्ञान निद्राल उत्थितं ब्रह्मनिष्ठं प्रति सामाऽऽगमनंचवर्ण्यते ।

यजुर्वेदेच यज्ञनिरूपणावसरे इयं वैरथन्तरं असौ बृहत् अन्तरिक्षं वामदेव्यं वैरूपं, वैराजं यज्ञायज्ञीयं, गायत्रमित्यादिना साम प्रशंसा श्रूयते । तैत्तरीयोपनिषदि, ब्रह्मसाक्षात्कारेण विगलित सर्व व्यवहारस्य जीवन्मुक्तस्य स्वात्मानन्दानुभवं सामगानेनैव द्यापयति एतत्सामगायन् आस्ते हा ३ उ, हा ३ उ, हा ३ उ, इति ।

अत्र बहुभिर्जन्मभिरत्रापिजन्मनि नैकविधसुकृतपरिपाकवशात् समासादितमात्मतत्त्वं एतादशमितिनिर्वक्तुमशक्तस्य कृतकृत्यस्य जीवन्मुक्तस्य स्वात्मानन्दानुभवाविष्करणं हाउ हाउ, इत्यनेनक्रियते, अहो भाग्यं अहो भाग्यं अहो ज्ञानं अहो ज्ञानं, इतिवत् आदरातिशये आनन्दातिशयेचाभ्यासः ।

आथर्वणे च

ऋचं साम यजामहे याभ्यां कर्माणि कुर्वते-अथ-7-54-1

ऋचः सामानि भेषजा .... .... .... 11-7-24

ऋचां चवै साम्नां च ब्रह्मणश्च प्रियंधाम .... 15-6-9

ऋचो मनुष्य लोकमुपनयन्ते, अन्तरिक्षं यजुभिरुन्नीयते, स पाप्मानाविनिर्मुक्तः ससामभिरुन्नीयते ब्रह्मलोकमिति, निरतिशयानन्द ब्रह्मलोकप्राप्तिस्सामवेदेनैवेति प्रश्नोपनिषदि श्रूयते प्रश्नः-५-५ इति साम प्रशंसा विद्यते ॥

## ॥ धर्मशास्त्रेऽपि ॥

ऋचा तु तृप्यतिपिता यजुषातुपितामहः ।
पितुः पितामहस्साम्ना छन्दोगोह्यधिकस्ततः ॥

अटेत पृथिवीं सर्वां सशैल वनकाननाम् ।
यदिलभ्येत पित्रर्थे साम्नामक्षरचिन्तकः ॥ Source?

इति पितृप्रेमास्पदत्वं सामवेदस्य स्मर्यते ।

श्रीभगवतागीयते गीतायां किंचनपद्यम्—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभः तस्मादेतत्त्रयं त्यजेत् ॥ इति ।

अत्र कामक्रोधलोभाख्यं दोषत्रयं नरकप्रापकत्वात् आत्मनाशकत्वाच्च अवश्यं त्यक्तव्यमिति स्मर्यते । एतादृशस्य दोषजातस्य दुस्त्यजत्वं सेतुवत् परप्राप्तिप्रतिबन्धकत्वम्, त्यागोपायश्चनिरूप्यते सामवेदे

सेतुषामाद्वयं साम्नि । इमामेव श्रुतिं भगवानपि स्वीयगीतावचनस्य मूलम्मन्येतेति अनुमातुं शक्यते स्मृतिरूपाया गीताया अपि श्रुत्यपेक्षत्वात् । अत्रत्याश्रद्धानृतयोः कामपदेन ग्रहणं गीतायाम् ।

भागवताग्रेसरः देवर्षिवर्यो नारदोऽपि अनवरतं वीणायां सामैवगायतीति प्रतीयते । नारदः साम सुस्वादमगात् कर्णरसायनम् इति 6-26-22 देवीभागवते । अत एव स्वरवर्णमात्रादीनां प्रातिस्विक स्वरूपविवरणं लौकिक गानस्यापि स्वरादि विमर्शनम्, सामगानप्रकारः गीतिगुणा दोषाश्च एवमादयो बहवोविषया प्रकाश्यन्ते नारदेन स्वीयशिक्षायाम् ।

अत एव सर्ववेदविदोऽपि नारदस्य छान्दोग्यस्य स्वीयोपनिषत्वात् तद्वारैव सनत्कुमारादात्मविद्या लाभ इति भूमविद्यायां ज्ञायते ।

## ।। साम वेदस्य काचित् अपप्रथा तत्परिहारश्च ।।

"तस्मात्तस्याशुचिर्ध्वनिः" इति मनुस्मृतौ किंचन वाक्यं विद्यते । सामध्वनिरशुचिरित्यस्यार्थः प्रतिभाति । अतः सामवेद श्रवणं न श्रेयस्करमिति मन्यन्ते पण्डितंमन्याः केचन ।

इदं वाक्यं कुत्र प्रकरणे किमर्थं प्रवृत्तमिति विचार्य निर्णेतव्योऽस्यार्थः । उपाकर्मानन्तरं यावत् षण्मासं अध्येतव्यम् । तत्रानध्यायान् वर्जयित्वाऽध्ययनार्हकालेऽध्येतव्यम् । तादृशाध्ययनस्यैवादृष्ट

जनकत्वमिति सर्वस्मृतिसिद्धम् "अनध्यायेष्वधीयानाः शतक्रतु वज्रेणाभिहताः शेषान्व्याख्यास्यामः" इति अनध्यायेऽधीतस्य व्यर्थतां स्मरति चरणव्यूहे ॥ अत अनध्यायान्निर्दिशतिमनुः

"इमान्नित्यमनध्यायान धीयानोविवर्जयेत्" ४-१०१-इत्यादिना।

तत्र "सामध्वनावृग्यजुषी नाधीयीत कदाचन" ४-१२३

इति सामवेद श्रवणे ऋग्वेदयजुर्वेदयोरनध्ययनमुक्त्वा तदुपपादकतया समनन्तरश्लोकः प्रवृत्तः।

"ऋग्वेदो देवदेवत्यः यजुर्वेदस्तुमानुषः।
सामवेदः स्मृतः पित्र्यः तस्मात्तस्याशुचिर्ध्वनिः।। इति" ४-१२४

अत्र कुल्लूहुभट्टव्याख्या एवं पितृदेवताकत्वात् सामवेदस्य पितृस्मारकत्वादशुचिरिव नत्वशुचिरिति। गौतमधर्मसूत्रेऽपि अनध्यायप्रकरणे ऋग्यजुषंच सामशब्दोयावत् इत्युक्तम्। विधिनिषेधोपपादकतया प्रवृत्तस्यार्थवादस्य न कुत्रापि प्रामाण्यमंगीक्रियते प्रामाणिकैः। बर्हिषि रजतंनदेयमित्युक्त्वा रजतदाननिषेधोपपादकतया सोऽरोदीत् इति प्रवृत्तस्यार्थवादस्य प्रामाण्यं नांगीकृतं वाक्यार्थविचारकुशलैर्मीमांसकैः। प्रमाणान्तरविरोधेन गुणवादत्वमंगीकृतमत्र तद्वत् सामप्रशंसापरपूर्वोक्त प्रमाणबाहुल्यात् "तस्याशुचिर्ध्वनिरिति वाक्यस्यापि गुणवादत्वमंगीकर्तव्यम्। अतएवाशुचिरिव नत्वशुचिरितिव्याख्यातम्। एवमन्यत्रापि सामदूषणे एवमेव समाधातव्यम्॥

तस्मात्तस्याशुचि ध्वनिरित्यस्य व्याख्यान्तरं कृतं कैश्चित्। मनुस्मृतौ तृतीयाध्याये ॥

ऋषिभ्यः पितरो जाताः पितृभ्योदेवमानवाः।
देवेभ्यस्तु जगत्सर्वं चरं स्थाण्वनु पूर्वशः॥ ३-२०१

इत्युक्तम्। अत्र पितृभ्यः देवमानवा उत्पन्ना इत्युक्त्वा चतुर्थाध्याये" ऋग्वेदोदेदेवत्यः इत्याद्युक्तम्। अत्र देवमनुष्यदेवताक ऋग्वेद यजुर्वेदापेक्षया देवमनुष्योत्पादकपितृदेवताकस्य सामवेदस्य श्रैष्ठ्यमभिप्रेतमिति प्रतिभाति। अतः तस्मात्तस्याशुचि ध्वनिरित्यस्य तस्मादिति पूर्वप्रकृत परामर्शि सर्वनाम्ना पितृदैवत्यत्वविशिष्ट सामवेदस्यैव पूर्वप्रकृतस्य प्रधानस्य परामर्शेन - तस्मात् तादृशसामवेदात् - तस्य वेदान्तरस्य ऋग्यजूरूपस्य ध्वनिः अशुचिः। सामवेदस्य श्रेष्ठत्वात् तत्सन्निधाने महतामागमे यथा वा अनध्यायः, तथा वेदान्तरस्यानध्यायः इति। इयं च व्याख्या साम ध्वनावृग्यजुषी नाधीयीति इत्यस्य ऋग्यजुषं च साम शब्दोयावत् इत्यस्य च सामशब्द श्रवणे वेदान्तरस्यानध्ययनं सामवेदश्रैष्ठ्य प्रतिपादनद्वारा समर्थयति प्रकरणानुसारेण। अपि च सामध्वनेरशुचित्वे तदाश्रयस्य वेदस्याप्यशुचित्वमङ्गीकृतंस्यात्। तदा सामवेदो ब्राह्मणानां प्रसूतिरिति श्रुत्या विप्रजन्मकारण सामवेदनिष्ठाशुचित्वं विप्राणामपिस्यात् सुवर्णनिष्ठफालफल्यास्याभरण इव कारण गुणस्य कार्येष्वनुगमावश्यंभावात्। विप्राणां जन्मसिद्धस्याशुचित्वस्या

पनोदयितुमशक्यत्वात् अशुचेः कर्मानधिकारात् अनुष्ठातुरभावेन कृत्स्नस्य वेदस्याननुष्ठान लक्षणाप्रमण्यमापतेदिति सर्वस्यापि विप्लवः प्रसज्येन। तस्मात् प्रमाणशरणैर्यथोक्तार्थावलम्बिभिर्भाव्यम्। प्रसङ्गादभिहितं सामवेदस्य प्रकृतत्वात् अपप्रथापरिहारस्यावश्यकत्वाच्च।

गौतमीयापर सूत्रे "यथोक्तं सामगानमनुगीतो ब्रह्मलोकमवाप्नोति इति ब्रह्म मेधप्राप्या ब्रह्मलोकावाप्तिः सुस्वरसामगानेनैवानायासेन साध्या इति प्रतिपाद्यते।

ससामभिरुन्नीयते ब्रह्मलोकमिति च ब्रह्मलोकप्रापकत्वं श्रूयते। एवं ब्रह्मलोकप्राप्ति साधनस्य यज्ञीयदेवतानां प्रीति जनकस्यशिवा शिवयोः प्राणवत् प्रिय भाजनस्य भगवद्विभूतिरूपस्य सामवेदस्य अशुचित्वं यथा श्रुतं यदि गृह्येत तदा पूर्वोक्त श्रुतिस्मृतिपुराणानामप्रामाण्यमङ्गीकृतं स्यात्। अतः यथोक्तार्थ एव श्लाघीयान्॥

एवं चतुर्धाविभक्तस्य वेदाख्यकल्पतरोः दृष्टादृष्टार्थसकलेप्सित फलदानशौण्डस्य भारतदेश सनातनमतयोः मूलस्तंभायमानस्य देव दानवमानवादि सर्व प्रण्युपजीव्यस्य लोकत्रय परिस्थितिहेतुत्वं राज्य-परिपालनसामर्थ्यप्रयोजकत्वं च स्मरति मनुः।

"चातुर्वर्ण्यं त्रयो लोकाः चत्वारश्चाश्रमाः पृथक्।
भूतं भव्यं भविष्यच्च सर्वं वेदात्प्रसिद्ध्यति॥

बिभर्ति सर्वं भूतानि वेदशास्त्रं सनातनम् ।
तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥
सेनापत्यं च राज्यं च दण्ड नेतृत्वमेवच ।
सर्वं लोकाधिपत्यं च वेदशास्त्र विदर्हति ।
पितृदेव मनुष्याणां वेदश्चक्षुस्सनातनम् ॥
अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः

द्वादशाध्याये-९३-१००

एवं वेदाध्ययनस्यावश्यकतां तद्गतस्सर्वकार्यसमर्थतां च निरूप्याध्ययनाभावे जन्मवैफल्यं च स्मरति—

"यथा काष्ठमयो हस्ती यथाचर्ममयो मृगः ।
ब्राह्मणस्त्वनधीयान स्त्रयस्ते नाम बिभ्रति ॥"
योऽनधीत्याद्विजोवेद अन्यत्र कुरुते श्रमम् ।
सजीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ २-१६८

एवमन्वयव्यतिरेकाभ्यां वेदाध्ययनमावश्यकं प्रतीयते । अत्य-न्तापदि कृत्स्नवेदाध्ययनासंभवे एकदेशाध्ययनमनुमतं पराशरेण ।

तस्माद्वृषलभीतेन ब्राह्मणेन विपश्चिता ।
अध्येतव्योप्येकदेशः यदि सर्वं न शक्यते ॥ इति ।

अतः श्रीरुद्रपुरुषसूक्तोपनिषदध्ययनं सर्वैः कार्यम् अत्यन्ताशक्तिविषयेगायत्रीमात्रं वाऽभ्यसनीयम् । गायत्रीमात्रसारोऽपि द्विज एव न संशय इत्युक्तेः । इतिहासपुराणानामपि वेदार्थप्रकाशनेनैव सार्थकृपमिति प्रतीयते इतिहासपुराणाभ्यां वेदं समुपबृंहयेदित्यादिना, वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना, निगमकल्पतरोर्गलितं फलम् इत्यादिना तेषां वेदसारत्वावगमात् ।

अस्मिन् ग्रन्थे सामवेदं तत्रापि कौथुम शाखामधिकृत्य नवतिः ग्रन्थाः विचारिताः। तत्र सामवेदीयाश्शाखाः कति ? तासु इदानी-मुपलभ्यमानाः काः ? ताश्चकुत्रोपलभ्यन्ते। कौथुमशाखायां मन्त्र-भागाः के, गान भागाः के, तेषां संख्या कीदृशी, सप्तगानानि किं नामधेयानि, तेषां प्रवृत्तिनिमित्तम् किं, ऊहगानं किं पौरुषेयं उता-पौरुषेयम्, ऊहगानसाप्तविध्यम्, सप्तानां विभाजकधर्माः। ऋग्वेदे-ऽनन्तर्गतामन्त्राः के। अष्टौ ब्राह्मणानि कानि, तेषुप्रतिपाद्याः के। छान्दोग्यस्य विवरणं श्रौत सूत्राणां दशविधत्वम् एकैकस्यान्येनागतार्थता सामप्रातिशाख्यङ्कतिविधम। सामवेदस्य शिक्षा चतुष्कं कथमुपयुज्यते। छलाक्षराणां विवरणम्, गृह्यसूत्रापरसूत्रस्थाविषयाः। गौतम धर्मसूत्रं धर्मसूत्रान्तरात् विशिष्टविषयावबोधकम्। गौतमः किं सामवेदीति शङ्कासमाधानम्। कारिकाग्रन्थाः श्रौतस्मार्त प्रयोगग्रन्थाः एतेषां किं मुद्रापितं कुत्र इत्यादयः प्रतिपाद्यन्ते।

1960 क्रैस्तव वर्षे द्राविडभाषामयं सामवेद सर्वस्वमिति द्वासप्तति सामवेदग्रन्थानधिकृत्य विषयविचार सहकृतं पुस्तकं मुद्रापि-तम्मया। तदपेक्षयाकतिचनग्रन्थाः विषयविचारश्च अधिकतयाऽत्र विद्यन्ते। संस्कृतभाषापरिचयरहितानामपि विषयावबोधाय हिन्दि भाषायां अङ्गलभाषायां चानुवादं कृत्वा मुद्रापितम्। तयोर्भाषयोरनुवादं कृतवतां कृतज्ञतां बहुशः निवेदयामि। अन्ते च श्रीमदप्पय्यदीक्षि-तेन्द्राणां वंशावलिः संकुचिततया मुद्रापिता। एतद्ग्रन्थरचने प्रवृत्ति-मुत्पाद्य साफल्यं कृतवतो भगवतो भवानीपतेश्चरणनलिनयोस्सादरं वितीर्यतेऽयं ग्रन्थः।

इत्थम्
1—9—72 ग्रन्थकर्ता

# AN APPRECIATION

*by*

The Hon'ble Sri K. VEERASWAMI
*(Chief Justice, High Court of Tamil Nadu)*

All the sciences of the world will not be useful without the knowledge of the Self, which is beyond Name and Form. Hence, the realisation of the Supreme Brahman or Ultimate Reality should be the objective of every aspirant. This is not possible by performing sacrifices and religious rites alone. To achieve this, the senses which enable us to gain external knowledge should be withdrawn and controlled and the Atman should be in communion with Brahman. The Atman is not concerned with the Maya or illusion about the existence of the external world.

It is not easy to attain Gnana or the supreme knowledge, without going through the Karma Marga and Bhakti Marga. By doing Karma a person's sins are wiped out; by following the next step, Bhakthi, the person becomes mentally firm and will be in a position to attain the Gnana or knowledge. 'Tat Twam Asi' Knowledge of the Maha Vakya enables the aspirant to realise himself, i.e. to realise that he is not the body or mind but he is the real Atman which is the Ultimate Brahman.

Performance of the Yagas is the first step in Karma Marga. Of course in doing the said Karma the aspirant should also have devotion. So Karma Marga and Bhakti Marga will go side by side. After taking these two steps the aspirant reaches the third step, viz., Gnana Marga or Gnana Yoga, which enables him for the realisation that the Atman and the Brahman (the Supreme Being) are one and the same.

Of the four Vedas, "I am Sama Veda" says Lord Krishna. Vedas form the basis of the Hindu Religion, the mother of all Religions. Sama Veda consists of a thousand

branches, of which the Kautuma Sakha of Sama Veda is prevalent in South India. The Kautuma Sakha consists of two sections — Mantras and Brahmanas. There are 8 Brahmanas. The sixth Brahmana is known as Chandogya Upanishad Chandogya Upanishad consists of 10 chapters. The first two chapters deal with mantras for the various samskaras. Chapters 3 to 7 deal with various upasanas and the remaining 3, i.e. 8th, 9th and 10th chapters deal with or expound the Nirguna Brahmaswarupa. It is in this Chandogya Upanishad that the 'Tattwam Asi' doctrine is affirmed. The total number of Riks in Sama Veda Kautuma Sakha is 1875.

Modern Music in India has its origin in the sama gana as it is chanted musically. In the sacrifice the Devatas are summoned by Rik Veda Hymns, offerings are made by Yajur Veda mantras and after that, the Devatas thus summoned are praised in terms of Sama Veda. The Devatas thus gratified bless the person who has arranged for the performance of the Yagna.

The third Brahmana (Samavidhana Brahmanam) deals with mantras to be meditated by persons unable to perform yagna for freedom from disease, for long life, for salvation etc.

Sri Mayuram Ramanatha Dikshithar has referred to a number of Books and has done a lot of research work in bringing out this valuable book Sama Sara Sarvaswam.

A knowlcge of the Vedas is essential to all those who desire to know that by which one can know everything. The author deserves to be praised and encouraged in his venture.

His analytical treatment of the subject will be appreciated by one and all.

46, III Main Road,
G. Nagar, Madras-20 — K. VEERASWAMY
18-9-1973

# PREFACE

Moksha is the chief of the four purusharthas. The means therefor is tattvagnana. Tattvagnana is derived by meditation and study of the Mahavakyas of which Tat Twam asi — Thou art that is the direct forthright affirmation of the identity of the Jivatman with Paramatma. This mahavakya is in the Chandogya Upaniahad of Sama Veda. Lord Krishna says in the Gita that of the Vedas He is Sama Veda. In the yagna, the devatas are hailed and summoned by Rig Veda hymns. Offerings to them are made by Yajusha mantras. And the praise of the devatas thus summoned is in terms of Sama Veda. And the devatas, thus gratified, reward the yayaman into wealth. All other Vedas praise Sama Veda. In the Dharma Sastra, it issued that the pita is pleased by Rig Veda, the pitamaha by Yajurveda and and prapitamaha by Sama Veda. The chanting of the Saman pleases all three. The great Narada chants Saman on his famous Veena always, according to Devi Bhagavata. And Narada is the author of one of the chief Lakshana Granthas of Sama Veda.

There is a disability supposed to attach to Sama Veda. Manu in his Manava Dharma Sastra says that Sama Veda dhvani is asudha. And this has been construed by some to mean that listening to Sama chanted is wrong. But the context in which this occurs has to be noted. It is while speaking of occasions when Veda adhyayana is prohibited that this occurs. When Sama is being chanted, according to Manu, Rik and Yajur are not to be chanted Since Sama hails pitras, it is thought that its chanting is undesirable in general occasions. This is sheer Arthavada, like the prohibition of the gift of silver in yagnas on the ground that in teras of Rudra were transformed into silver. Kulluka Bha-

ttar in his commentary on Manu says "Susuchiriva natvasuchi". To interpret this literally leads to the conclusion, manifestly absured, that all brahmans, – who emerged from Sama Veda — are impure. And Brahmans have been enjoined to perform various Karmas! This would also mean that Vedas are not Pramane – which discredits vaidik dharma as a whole.

Sama veda has a thousand branches. A person qualified in these is fit for exercising royal power concess. The Veda constitutes the eye of the Pitra, Devas and man. All creation has its sanction in the Veda and Veda is the immutable bedrock of human society and its dharma. The eighteen puranas seek merely to expound the Veda in singular terms.

In this book, the Kautuma Sakha of Sama Veda has been used as the basis and the various parts of the Veda, respective uses and the fruits of their shed have been set forth. When offering abhivandanam we affirm one link with Drahyayana Sutra. The benefits we derive from the great rishis who have revealed to us, the Vedas are manifold. I hope this attempt to set out the essence of the Sama Veda will prove beneficial to all who have faith in our immemorial Vaidika dharma. I pray that the Lord's grace may flow abundantly to all reverent students of the Veda.



सामवेदमूर्तिः

नीलोत्पलदलाभासः सामवेदो हयाननः ।
अक्षमालान्वितो दक्षे वामे कम्बुधरः स्मृतः ॥

॥ श्रीपार्वती और शिवजी की जय हो।

## प्रस्ताव

इस संसार में चार पुरुषार्थ हैं, उन में मोक्ष ही उत्तम है। मोक्ष पानेका उपाय तत्वज्ञान है। वह तत्वज्ञान महावाक्य (चार) से होता है। उन में "तत्त्वमसि" महावाक्य स्पष्ट है और श्रेष्ठ भी है। क्यों कि चेले के सामने "तुम वही ब्रह्म हो" इस तरह निश्चय रूप से समझाता है। इसी वजह से यह उत्तम है। यह सामवेद में है। इसे मन में रख कर भगवान् कृष्णजी ने गीता में कहा कि "वेदानां सामवेदोऽस्मि"। और यागों में ऋग्वेद मन्त्रों से देवता ओं को बुलाकर यजुर्वेद मन्त्रों से हविर्भाग देते हैं। इस के बाद सामगान से देवताओं की स्तुति करते हैं। इन स्तुतियों से खुश हो कर देवतायें अच्छा फल देती हैं। फल प ने में नजदीक हों ने से (खास साधन), वेदों में सामवेद ही श्रेष्ठ हैं। और वेदों में सामवेद के बारे में प्रशंसा पायी जाती है।

धर्मशास्त्रों में कहे गये हैं कि ऋग्वेदसे पिता प्रसन्न होता है यजुर्वेद से पितामह बाप का बाप खुश होता है। और सामवेद से प्रपितामह अर्थात् बापका जो बाप उसका बाप भी प्रसन्न होता है। इस से मालूम होता है कि सामगान से जो मूल पुरुष है वह भी प्रसन्न होता है। जो परम भागवत नारद जी है वह हमेशा अपनी वीणा में सामगान करते करते तीन

लोग घुमा करता है इस तरह देवीभागवत में दीख पडता है। इसी कारण से भगवान नारद जी ने सामवेद में लक्षण ग्रन्थ को लिखा ॥

लेकिन इस प्रकार उत्तम सामगान का एक अपवाद अनजान लोग कहते हैं :—मनु स्मृति में "साम ध्वनिः अशुचिः" इसे देख ने से सब लोग जानते है कि सामवेद अपवित्र है। इस सामवेद को सुनना भी अपवित्र है। इसका जवाब देना आवश्यक है। हमेशा सब जगह में पद का अर्थ कहने में प्रकरण या स्थल को देखना मुख्य है, प्रकरण के सिवा अर्थ कहना दोष ही है, "सामध्वनिः अशुचिः" यह मनुस्मृति में 'जब वेदाध्ययन करना? जब नहीं करना? इसका विवरण करने के समय दीख पडता है, कि जब साम गान सुन पडता है तब ऋग, और यजुस, और अथर्व वेदों का अध्ययन नहीं करना चाहिये।" "अनध्ययन है" ऐसा कहकर, अर्थवाद रूप से, "सामवेद पितृ देवत है, इस से वह ध्वनि अशुद्ध है," इस प्रकार कहा गया है। देखिये, याग में रजत को न देना (दक्षिण रूप से) ऐसा कह कर अर्थवाद रूपसे "रुद्र जी ने रोदन किया आंखों से आंसू गिर पडा वह रजत होगया, आंसूसे पैदा होने के कारण रजत को याग के समय नहीं देना" यह अर्थवाद है। इस से इसका प्रमाण नहीं इस प्रकार मीमांसा शास्त्रों में निश्चय हुआ। इसी प्रकार मनुस्मृतिका व्याख्यान करनेवाला कुल्लूक भट्टजीने कहा कि "अशुचिः", अशुचि के जैसे है, लेकिन अशुचि नहीं" मीमांसा मतके अनुसार इस अर्थ को जरूर मानना चाहिये, नहीं तो "सामवेद अशुद्ध है" यह अर्थ आ जायगा। तब

"साम वेदो ब्राह्मणानां प्रसूतिः" सामवेद से ब्राह्मण लोग पैदा हुआ, इस तरह वेद कहता है, तो ब्राह्मण लोग अपवित्र है अछूत है एक ही कर्म भी नहीं कर सकता है ऐसा होने में ब्राह्मण के बारे में जो जो कर्म वेद में विहित है वैसे वेद अप्रमाण होंगे।" वैदिक मतका भी नाश होगा। ऐसा न होना चाहिये, ऊपर कहे हुए अर्थ के अनुसार साम गान के सुनने में और वेदों का अध्ययन नहीं करना, पर पारायण आदि करना ही है। यही उचित है। इसका और भी विशेषार्थ कह सकता है कि "अशुचिः" न शुचिः = अशुचिः तत्पुरुष, नास्ति शुचिः यस्मात् (अन्यः) बहुव्रीहिः जैसे "अनुत्तमां गतिम्" इससे यह अर्थ होता है, साम ध्वनि से और ध्वनि शुचि नहीं, सामही शुचि है, इस प्रकार बहुव्रीहि कहने से "सामध्वनिः अशुचिः" सबसे शुचि, पवित्र होता है पितृदेवतहै बालबच्चे देनेवाले पितृदेवता का प्रसाद या कृपादेनेवाला है यह भी उचित है॥

मनु स्मृति बारहवाँ अध्याय में "सामवेद हज़ार शाखा वाला है और ऋग यजुस्, अथर्ववेद बहुत शाखावाले हैं" इस प्रकार अनेक शाखावाले वेदों को जो जानता है वही राजा, राज काज या परिपालन करने का, लायक है। पितृ, देव, और मनुष्य लोगों को वेद ही पुराने या अनादि आंखें है, वेदों के अनुसार ही सब प्राणियों की सृष्टि हती है। जो वेदों में कहे गये है उन्हें बदलने का अधिकार किसी ग्रन्थकाभी नहीं।" कहे गये हैं।

इतिहास और अठारह पुराण और सब शास्त्र, वेदका अर्थ जानने के लिये मौजूद हैं। सनातन मत वेदों से ही सबकाल में

यहां विराजमान हैं। इस से हम सब जो वेद में कहे गये हैं उन सब को अच्छी तरह मानना चाहिये ॥

इस पुस्तक में कहेगये विषय ये हैं।

1. सामवेद - कौथुमशाखा के बारे में कहे गये हैं।
2. मन्त्र भाग-कितना प्रकार होता है।
3. आर्चिक-गान-प्रकृति, ऊह इनका विवरण।
4. ब्राह्मण भाग में कहे हुए विषय, क्या क्या ?
5. हमारे जिन्दगी में क्या क्या इस्ते माल होते हैं ?
6. छान्दोग्य उपनिषद् में मुख्य विषय कौन कौन है ?
7. द्राह्यायन जी ने हमें क्या क्या मदद या अनुग्रहको किया, जिनको हम हर रोज अभिवादन के समय में स्मरण करते हैं।
8. उनके जैसे और ऋषियों ने हमारे काम काज में या अनुष्ठान में मुशिकल के साथ कितने ग्रन्थको लिखा ?
9. वेदों के परिपालन केलिये लक्षण ग्रन्थ बहुत से हैं वे कौन हैं ? क्या कहते हैं ?
10. श्रौत सूत्र, गृह्यसूत्र, धर्म सूत्र, अपर सूत्र, कारिका, परिशिष्ट और प्रयोग ये क्या बयान करते हैं ९२ ग्रन्थ, इन सबों का सार इस पुस्तक में कहे गये हैं।

अन्त में अप्पय्य दीक्षितजी का वंशावलि भी कुछ कुछ कही गयी है। इस प्रकार इस ग्रन्थका प्रकाश करने का प्रवृत्ति देनेवाले और फल देनेवाले श्रीपार्वती परमेश्वरों के पैरों में इस ग्रन्थको प्रणामसे अर्पण करता हूँ। शुभ हो ॥

॥ श्री शिवाभ्यां नमः ॥

॥ ओन्नमस्सामवेदाय ॥

# ॥ सामसारसर्वस्वम् ॥

नीलोत्पलदलाभासं सामवेदं हयाननम् ।
अक्षमालान्वितं दक्षे वामे कम्बुधरं भजे ॥

वन्देतातमहाशयान्शमधनान् षट्कर्मनिष्ठान्सदा
साष्टब्राह्मणसामलक्षणचणान् येऽध्यापयन्साम माम् ।
वेदान्तार्थविवेचनेऽतिनिपुणान्रामाभिधान्सद्गुरून्
श्रीमद्देशिकचन्द्रशेखरगुरूंश्चाप्यन्वहं भावये ॥

अस्ति तावत् सामवेद इति वेदेषु चतुर्ष्वन्यतमः । यः श्रेष्ठत्वेन श्रूयते, "सामवेदोब्राह्मणानां प्रसूतिः" "एष हवा अयज्ञो योऽसामा" 'यः पुनरेतं (ओंकारं) त्रिमात्रेणवौमित्येतेनैवाक्षरेण परंपुरुषमभिध्यायीत स तेजसिसूर्ये संपन्नः.... ससामभिरुन्नीयते ब्रह्मलोकमित्यादिना ।

यं स्वप्रियतममात्मानमाह भगवान्भगवद्गीतायां, 'वेदानां सामवेदोऽस्मि' इति।

येन उपजीवनेन जीवन्ति देवादयः स्थावरान्तास्सर्वे "सवा इदं विश्वं भूतमसृजत तस्य सामोपजीवनं प्रायच्छत्..." तद्योऽसौकृष्टतम इव साम्नः स्वरः तं देवा उपजीवन्ति, 'योऽवरेषां प्रथमस्तं मनुष्याः' योद्वितीयस्तं गन्धर्वाप्सरसः, यस्तृतीयस्तं पशवः यश्चतुर्थस्तं पितरः येचाण्डेषु शेरते, यः पञ्चमस्तमसुररक्षांसि, योन्त्यस्तमोषधिवनस्पतयः यच्चान्यज्जगत् तस्मादाहुस्सामैवान्नमिति'॥ (सामविधानं १-१-८)।

यस्मै स्पृहयन्ति हविर्भुजो देवा यज्ञेषु प्रयुज्यमानेन गुणिनिष्ठगुणाभिधानेन स्तोत्रेण प्रीताः प्रसन्नाश्च।

यस्मादुत्पद्यते स्वर्गोलोकः 'स्वरिति सामभ्योऽक्षरत् सस्वर्गोलोकोऽभवत्। (षड्विंश-ब्रा-१-५-७)।

यस्य श्रवणेन प्रीतोभवति परमेश्वरः परदेवताच 'सामप्रियः स्वरमयः (शिवाष्टोत्तरं) सामगानप्रिया, (ललितासहस्रनाम)।

यस्मिन् रमन्ते कृतकृत्यास्साक्षात्कृतब्रह्माणो ब्राह्मणाः 'एतत्सामगायन्नास्ते हाउ हाउ हाउ' इति तै....उपनिषत्।

एवं प्रथितमहिमासामवेदः सहस्रशाखात्मकः । भणति भगवान् पतञ्जलिः स्वीये महाभाष्ये 'सहस्रवर्त्मासामवेद इति ।

नचात्र वर्त्म शब्दस्य मार्गपरत्वात् तत्तद्देश भेदेन गान-प्रकारभेदात्सहस्रं गीतिभेदाएवसाम्नः नतु शाखाभेदाः, गानप्रकारभेदएवानूद्यते पतञ्जलिना, सहस्रवर्त्मासामवेद 'इति इति केषांचिदभिमतिः ऋजुदर्शिनां प्रमाणपरतन्त्राणां बुद्धि पथमारोहति। यतः श्रीमद्भागवते द्वादशस्कन्धे षष्ठाध्याये वेद-विभागकथनावसरे,

"सुकर्माचापि तच्छिष्यः सामवेदतरोर्महान् ।
सहस्रं संहिताभेदं चक्रे साम्नां ततस्तुतम् ।। [तत्रैव]

पौष्पिजिशिष्या जगृहुः संहितानां शतं शतम् ।
अत्र श्रीधरीयम्—तावतीः शाखा जगृहुः इति ॥

उदीच्यास्सामगाश्शिष्यास्तस्य पंचशतं स्मृताः ।
[विष्णुपुराणे]
हिरण्यनाभात्तावत्यः संहिता यैर्द्विजोत्तमैः ।।

गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्य सामगाः इति अत्र सर्वत्र संहिता भेद इत्येवोक्तं, नतु गानस्य भेद इति॥

चरणव्यूह परिशिष्टेच—'सामवेदस्य किल सहस्रंभेदा भवन्ति एष्वनध्यायेष्वधीयानास्ते शतक्रतु वज्रेणाभिहता-श्शेषान् व्याख्यास्यामः' इत्युक्तम्। अत्रापि-वेदस्य भेदा-इत्येवोक्तम्, नतु गानस्येति। अतः एकशतं अध्वर्यु शाखाः, एकविंशतिः ऋग्वेदस्य, नवाथर्वणः इतिवत्, सामवेदस्य सहस्रं शाखा आमन्नित्येवावगन्तव्यम्॥

॥ शाखा भेदाः ॥

चरण व्यूह परिशिष्टे, शेषान् व्याख्यास्यामः इत्यत्र, राणायनीय शाट्यायनीय शाट्यमुग्र कल्वल, महाकल्वल, लांगल, कौथुमीय, गौतमीय, जैमिनीय, भेदेन नव शाखाः, अथवा राणायनीय, शाट्यमुग्र, कालेय, महाकालेय, लांगला-यन, शार्दूल, कौथुम, भेदेन सप्तशाखास्सन्तीति निर्दिष्टम्। इदानीं द्राविड वंग बीहार प्रदेशेषु कौथुम शाखा, द्राविडे केरळे च जैमिनीय शाखा, कर्णाटक सिह्माचलप्रान्तेषु राणायनीय शाखा, इति शाखात्रयमेवोपलभ्यते। गौतमशा-

खिनः क्वचित्स्थले वसन्तीति श्रूयते। शतत्रयवर्षेभ्यः पूर्वं शार्दूल शाखिन आसन्निति श्रूयते कर्णपरंपरया। राणायनीय शाखायां मन्त्रब्राह्मण श्रौतस्मार्तसूत्राणि-प्रातिशाख्यं-इत्याद-योग्रंथाः कौथुमशाखातोविलक्षणा नोपलभ्यन्ते। जैमिनीयेपरं उपलभ्यन्ते।

कौथुम शाखाध्यायिन एव उत्तरदेशवासिनः लाट्यायन श्रौतसूत्रं गोभिलीय गृह्यसूत्रं च स्वीयत्वेनाभिमन्यन्ते। तएव दक्षिण देशवासिनः द्राह्यायणीय श्रौतसूत्रं खादिर गृह्यसूत्रं च स्वीयमितिमन्यन्ते। तदनुसारेण चानुष्ठीयन्तेकर्माणि॥

सामगाचार्या स्त्रयोदश, राणायनिः सात्यमुग्रिः दुर्वासाः भागुरिः गौरुण्डिः गौल्गुलविः, औपमन्यवः दारालः, गार्गिसावर्णिः, वर्षगण्यः, कुथुमिः, शालिहोत्रः, जैमिनिः इति चरणव्यूहनिर्दिष्टाः।

॥ कौथुमशाखा ॥

कुथुमिना दृष्टत्वात् कौथुमशाखा। भारतदेशे प्रायशः कौथुमशाखाया एव लक्षणाध्येतृभिः श्रौतप्रयोगविद्भिः स्मार्ता नुष्ठाननिष्ठैश्च परिपाल्यमानत्वात् प्राचुर्याच्च तामेवाधिकृत्य ये

मुद्रिताग्रन्था अमुद्रिताश्च तालपत्रमया उपलभ्यन्ते तेषां अर्थप्रकाशनायेमं ग्रन्थं रचयितुं प्रयते। मन्त्र ब्राह्मणयोर्वेदनामधेयमिति-आपस्तम्बमहर्षिरसूत्रयत्। अतः प्रतिशाखं मन्त्रः ब्राह्मणं च विद्यते। कौथुमशाखायां एवम्।

॥ मन्त्रभागः ॥

पूर्वार्चिकम्, उत्तरार्चिकम् - अनयोः पदपाठः, स्तोभ पदपाठः, गानंचद्विविधम् — प्रकृतिः ऊहः इति। प्रकृतिश्च द्विविधा, ग्रामेगेयं अरण्येगेयमिति। ग्रामेगेयस्य ऊहः ऊहगानं अरण्येगेयस्य ऊहः रहस्यगानमितिसंज्ञा, विभागान्तरमपि, प्रकृतिश्च सप्तगानात्मिका। ऊहस्सप्ततन्त्रात्मक इति।

गायत्रं प्रथमं गानमाग्नेयंतु द्वितीयकम्।
तृतीयमैन्द्रं गानंस्यात्पावमानं चतुर्थकम्॥
अर्कद्वंद्वव्रतं चेति त्रीणिपर्वाणि पंचमम्।
षष्ठंच शुक्रियं गानं महानाम्नी च सप्तमम्।
एतानि सप्तगानानि प्रकृतेः कथितानि वै॥ इति सर्वानुक्रमणिका, एवं सप्तगानानि निर्दिष्टानि प्रकृतिभागस्यसर्वानुक्रमण्याम्। अत्र केचन आग्नेयैन्द्र पावमानारण्यक शुक्रियोहरहस्य

भेदेनसाम्नविध्यंवर्णयन्ति। तत् प्रकृतेः कथितानीति मूलग्रन्थवि-भागावसरे ऊहरहस्ययोस्संकलनस्यानौचित्यादसंगतमिव भाति। प्रमाणान्तरस्य तत्प्रमापकस्यानुपलभ्यमानत्वाच्च ।

अपिच सर्वानुक्रमण्यामेत्र

सप्तगानानिवैसाम्नां ब्राह्मणा अष्टवैस्मृताः ।

दशसूत्राणिसप्तापि दशलक्षणमुच्यते ॥

इति मूलग्रन्था निर्दिष्टाः । अत्र सप्तगानानीति मूल भूतप्रकृतिरेव निर्दिष्टेतिवक्तव्यम्, मूलग्रन्थ सन्निधिपठितत्वात्। विषयमिमंविचारकुशलास्समर्थयन्तु ।

ऊहस्सप्ततन्त्रात्मक इत्युक्तम् । तन्त्राणिचैवं विभक्तानि ।

दशरात्रम्-संवत्सरः-एकाहः-अहीनः-सत्रम्- प्रायश्चित्तम्-क्षुद्रः इति। एषमन्त्रभागः । ब्राह्मणभागश्चाष्टधाविभक्तः ।

अष्टौहिब्राह्मणग्रन्थाः प्रौढंब्राह्मणमादिमम् ।

षड्विंशाख्यं द्वितीयं स्यात् ततस्सामविधिर्भवेत् ॥

आर्षेयं देवताध्यायो भवेदुपनिषत्ततः ।

संहितोपनिषद्वंशो ग्रन्था अष्टावितीरिताः ॥ इति ॥

मन्त्रभागश्चपरिपाल्यतेऽध्येतृभिरिदानीम्। ब्राह्मण भागस्तु क्वचिदेव विलसति अध्येतृपुरुष वैरल्यात् ।

दशसूत्राणीत्थम् ॥

द्राह्यायणमनुपदं निदानं कल्पमेवच ।
उपग्रन्थाश्च क्षुद्राश्च तन्दा (ताण्डय) लक्षणमेवच ।
सूत्रं पञ्चविधं ज्ञेयं कल्पानुपदमेवच ।
अनुस्तोत्रंतु विज्ञेयं सूत्राणां दशकं स्मृतम् " इति॥

ऋक्तन्त्र, सामतन्त्र फुल्लसूत्र, मात्रालक्षणशिक्षात्रयादयो लक्षणग्रन्थाः गृह्यापरधर्मसूत्रादयोग्रन्थाश्च तत्तद्ग्रन्थविवरणावसरेविव्रियन्तेऽत्र ।

॥ आर्चिकभागः ॥

पूर्वार्चिकम्—ग्रामेगेयारण्येगेयसाम्नां आधारभूताऋचः पूर्वार्चिक संज्ञयाव्यवह्रियन्ते। तस्य छन्दआर्चिकमित्यपि संज्ञा भवति। तत्र प्रपाठकास्सप्त सन्ति। एकैकस्मिन् प्रपाठके-दशखण्डास्सन्ति। खण्डानां दशतिरित्यपि संज्ञा भवति। सप्तमे-प्रपाठके षट्खण्डाएव सन्ति। अत्र विद्यमाना ऋचः पंचाशदुत्तरषट्छतसंख्याकाः। ताएवम् -

| प्रपाठक | खण्ड | ऋचः |
|---|---|---|
| 1 | 10 | 96 |
| 2 | 10 | 97 |
| 3 | 10 | 99 |
| 4 | 10 | 98 |
| 5 | 10 | 96 |
| 6 | 9 | 99 |
| 7 | 6 | 65 |
| | आहत्य ऋचः | 650 |

एतासामृचां पद्पाठः विद्यते-तस्य छन्दःपदमिति संज्ञा ।

सामगानावसरे ऋग्व्यतिरिक्तान्यक्षराणि स्तोभसंज्ञानि गानसाधनतया गीयन्ते । तेषां पदपाठोऽधीयते परंपरया । तस्यस्तोभपदमितिनाम। तत्र प्रपाठकद्वयं पंचविंशतिखण्डाश्च सन्ति, एतदधिकृत्य स्तोभानुसंहारग्रन्थविवरणावसरे प्रस्तोष्यते ।

उत्तरार्चिकम्—उतरार्चिके नव प्रपाठकास्सन्ति । अर्धप्रपाठकस्य अध्याय इत्यपि संज्ञा । क्वचित्प्रपाठके अध्यायत्रयमपिविद्यते। अध्यायाः द्वाविंशतिः। सूक्तानि चतुश्शतम् ४००। ऋचः पंचविंशत्युत्तरशतद्वयविशिष्टसहस्रसंख्याकाः । १२२५ ।

स्वरबाहुल्यविशिष्टस्य गानस्य सामेति नाम, तत्र गानभागस्य रथन्तरं, बृहत्, वामदेव्यमिति संज्ञा । प्रकृतेः सप्तगानानी त्युक्तम् ।

तत्रप्रथमं गायत्रगानम् । एतस्याधारभूता "तत्स-वितुरिति" ऋक् उत्तरार्चिके ग्रन्थे षष्ठे प्रपाठके त्रयोदशाध्याये वर्तते । गायत्रगानस्वरूपं देवताध्यायब्राह्मणे पठितम् । गायत्र-गानस्य, यज्ञे प्रयोगकाले बहिष्पवमानादिस्तोत्रेगीयमानस्य लक्षणं आर्षेयब्राह्मणे, द्राह्यायणसूत्रे, गायत्रविधानग्रन्थे च, विस्तृततयाप्रोक्तम्, गानं च, बहिष्पवमानाज्यादि स्तोत्रेषु, ब्रह्मयज्ञे, उपनयनव्रते, उपाकर्मणि च प्रयुज्यते ।

द्वितीयमाग्नेयङ्गानं, तत्र गानाधारभूताः ऋचः प्राय-शोऽग्निदेवताकाः । अत आग्नेयमिति संज्ञा । आदित्प्रत्नस्य' शन्नोदेवीः, उतस्यनः, इत्यादयः सूर्यादिदेवताकाश्च काश्चनऋच-स्सन्ति । तथापि आग्नेयबाहुल्यात् प्राणभृन्न्यायेन आग्नेय संज्ञा ।

तृतीयमैन्द्रंगानं, तत्र बहुसाम्येकसामि बृहती त्रिष्टु-बनुष्टुबिन्द्रपुच्छानीत्यवान्तरभेदो वर्तते । एकस्यामृचि प्रायशो बहूनां साम्नां विद्यमानत्वाद्बहुसामीति संज्ञा । एकै-

कस्यामृचि एकैकं साम प्रायशो गीयते यत्र तस्यैकसामीति नाम। अत्र विद्यमानानां साम्नां बृहतीच्छन्दस्कायामृचि गीयमानत्वाद्बृहतीति संज्ञा। तथैव त्रिष्टुबपि। अनुष्टुभि अन्तिमखण्डस्य जागतत्वेऽपि खण्डान्तरे विद्यमानानामृचां आनुष्टुभत्वात् अनुष्टुबितिसंज्ञा प्राणभृन्न्यायेन। अन्तिम भागस्य नैकच्छन्दस्काः ऋचः, उष्णिक्छन्दसि खण्डद्वयं, ककुभि एकः, पङ्क्तौ खण्डत्रयं, सप्तमाष्टमौ गायत्रीपङ्क्ति-त्रिष्टुब्छन्दस्कौ नवमेखण्डे जगत्यष्टयादि छन्दांसि। देवतापि नैकविधा, अतः छन्दसा देवतया वा संज्ञां वक्तुं न शक्यते। ऐन्द्रगानस्य शेषरूपत्वादिन्द्रपुच्छमिति संज्ञया व्यवह्रियते। शेषे पुच्छशब्दः यज्ञपुच्छमित्यादौ प्रसिद्धः। सुत्येऽहनि यज्ञ-समाप्तौ क्रियमाणस्य कर्मणः यज्ञपुच्छमिति व्यवहारः याज्ञिकैः क्रियते।

चतुर्थंपावमानज्ञानम्। पवमानः सोमः, सोमदेवता-कानामृचां प्रायशः गीयमानत्वात्पावमानमिति अभिधीयते।

पञ्चमज्ञानं पर्वत्रयात्मकं। प्रथमं अर्कपर्व, अत्रविद्यमा-नानां साम्नां प्रायशः अर्कइति संज्ञा। अग्नेरर्कः, दीर्घतम-सोऽर्क इत्यादि। द्वितीयं द्वन्द्वपर्व। अत्र प्रायशः एकस्यामृचि

द्वे सामनी गीयेते। अतः द्वन्द्वपर्वेति नाम। तृतीयं व्रतपर्व। अत्र व्रताभिधानां साम्नां बाहुल्यात् व्रतपर्वेति संज्ञा पूर्वोक्तन्यायेन।

षष्ठंगानं शुक्रियम्। अत्र विद्यमाना ऋचः प्रायेण सूर्य देवताकाः, यद्यपि शुक्रशब्दः अग्नौ प्रसिद्धः, तथापि तेजस्त्वसामान्येन सूर्येऽपि प्रयुज्यते। अतः सूर्यदेवताकस्य पर्वणः शुक्रियमिति संज्ञा। अत्र विद्यमानानि कानिचित्सामानि आदित्यावयाभिधानानि विद्यन्ते। आदित्यात्मा, चक्षुस्साम, श्रोत्रसाम, वाक्साम, जिह्वासाम, पुच्छसामेत्यादि। अतः, शुक्रियत्वमुपपद्यतेतराम्।

सप्तमं महानाम्न्याख्यं गानं। तत्र विद्यमानानां साम्नां महानाम्नीति संज्ञा। अतोऽस्य महानाम्नीत्वं, तत्रत्या ऋचः शक्करीछन्दस्काः, अतः शक्कर्य इत्यपि नाम। एवं प्रकृतेः सप्तगानानिनिर्दिष्टानि। तत्र पवमानान्त भागस्य ग्रामे गेयस्य सप्तदश प्रपाठकाः, अरण्येगेयस्य षट्प्रपाठकाश्चसन्ति। उभयोर्विद्यमानाः खण्डाः द्व्यशीतिसंख्याकाः। अतः संहिता भागस्य अशीतिद्वयमिति व्यवहारो विद्यते। खण्डानां दशतिः इत्यपि संज्ञा।

| गानम् | | | सामसंख्या |
|---|---|---|---|
| 1) | गायत्रम् | | 1 |
| 2) | आग्नेयम् | | 180 |
| 3) | ऐन्द्रम् | बहुसामि | 132 |
| | ,, | एकसामि | 64 |
| | ,, | बृहती | 150 |
| | ,, | त्रिष्टुप् | 49 |
| | ,, | अनुष्टुप् | 76 |
| | ,, | इन्द्रपुच्छम् | 162 |
| 4) | पावमानम् | | 384 |
| 5) | अर्कपर्व | | 89 |
| | द्वन्द्वपर्व | | 77 |
| | व्रतपर्व | | 84 |
| 6) | शुक्रियपर्व | | 40 |
| 7) | महानाम्नी | | 4 |
| | | आहत्य सामानि | 1492 |

आरण्य परिशिष्ट सामनी द्वे।

उद्वयामे....

भारुण्ड साम।

## ऊहगानम्

प्रकृतौ रथन्तरं, बृहत् , वामदेव्यमित्यादीनि सामानि एकस्यामृचि गीयन्ते । तान्येव उत्तरार्चिके विद्यमानयोरुत्तरयोरपि ऋचोः प्रकृतिवदेव ऊहेन गीयन्त इति यत् स एव ऊहः । प्रकृतौ विद्यमानानि एकैकस्यामृचि गीयमानत्वादेकर्चसामैव भवन्ति। ऊहेतु तिसृषु ऋक्षु गीयमानत्वादेकैकं साम तृचं भवति, तत्रापि क्वचिदेकर्चमपि विद्यते। ग्रामेगेयस्थानां साम्नां उत्तरयोरपि ऋचोः ऊहेन गीयमानत्वे स ग्रन्थः ऊहसंज्ञकः। अरण्येगेयस्थानां ऊहेनगीयमानत्वे रहस्यसंज्ञकः। रहस्यस्य ऊह्यमित्यपि संज्ञा भवति। ऊहरहस्ययोःयज्ञप्रयोगेष्वेवविनियोगः। अतएवाग्निष्टोमादियज्ञ क्रमानुसारेणैव ऊहग्रन्थः प्रवृत्तः। उत्तरार्चिकक्रमोऽपि यज्ञक्रमानुसारेणैव वर्तते। अग्निष्टोमादि विश्वसृजामयनपर्यन्तं अष्टसप्तत्युत्तरशतं यागाः ताण्ड्यमहाब्राह्मणे नित्या नैमित्तिकाः काम्याश्च विधीयन्ते। तेषामितिकर्तव्यताबोधकानि द्राह्यायणादीनि दशसूत्राणि विद्यन्ते। तान्यधिकृत्य परस्ताद्वक्ष्यते। क्रतूपयुक्तानां साम्नां स्वरबाहुल्यात ऊहापोह विषये महान् क्लेशः स्यात्। अत स्तादृशोहापोह बोधनार्थं सूत्राणि प्रवृत्तानि। विकृतिक्रतुपुस्तोमाः बहुप्रकारास्सन्ति। तेषां विष्टुतयश्च बह्व्यः। स्तोत्राणां च प्रकार भेदास्सन्ति सत्राहीनक्रतुषु

तेषां विधानाय प्रवृत्तानि श्रौत सूत्राणि दश द्राह्यायणादीनि। तत्रैव यज्ञा अपि विधीयन्ते। नैवं शाखान्तरे श्रौतसूत्रबाहुल्यं वर्तते। आश्वलायनबोधायनापस्तंबकात्यायनादीनां श्रौतसूत्र-मेकमेव। द्राह्यायणीयानांतु श्रौतसूत्राणां दशकं विद्यते। तदधिकृत्य विशदी करिष्यते। प्रायश्चित्तार्थं पारायणादिषु अदृष्टार्थजपेषु ब्रह्मयज्ञादिषु च ऊहरहस्य ग्रन्थः नोपयुज्यत इति संप्रदायः।

प्रकृतौ विद्यमानानि सामानि अपौरुषेयाणि। भगवतोनिश्वास-रूपेण प्रतिकल्पमाविर्भवन्ति। ऊहसामानितु 'यद्योन्यां तदुत्तरयो-रिति' न्यायेन प्रकृतौ यादृशं गानं विद्यते तादृशमेव उत्तरयोरपि ऋचोः ऊहेन गानं क्रियतइत्यतः पुरुषबुद्ध्या ऊह्यमानत्वात्पौ-रुषेयाणीतिमीमांसकाः। निदानकारास्तु रथन्तरादीनां गानानां तदाधारभूतानां ऋचामपि अपौरुषेयत्वात् ऋक्षु गानप्रक्षेपस्य पौरुषेयत्वेऽपि ऊहग्रन्थोऽप्यपौरुषेयएवेत्याहुः। सर्वथा ऊहसामानि जपादिषुनप्रयुज्यन्ते। रथन्तर बृहद्वामदेव्यादि शब्दानां ऋग्वि-शिष्टसामवाचकत्वं आहोस्वित् केवलगानवाचकत्वमिति सन्दिह्य ऋग्विशिष्टगानवाचकत्वे एकस्यामृचि विद्यमानस्य साम्नः अन्य-

स्यामृचि प्रक्षेपस्याशक्यत्वात् लाघवाच्च गानमात्र वाचक त्वमितिराद्धान्तितं पूर्वतन्त्रे । (7-2-1)

प्रकृतौ कनीयसि छन्दसि गीयमानस्य साम्नः ज्यायसि छन्दसि प्रयोगकाले गातव्यत्वेन विधिः वर्तते । यथा बृहत्साम "त्वामिद्धि हवामहे" इति षट्त्रिंशदक्षरायां बृहत्यां गीतं । तदेव "त्रिकद्रुकेषु" इति चतुष्षष्ट्यक्षरायामष्टिछन्दस्कायामृचि गेयत्वेन विधीयते । तत्र प्रकृत्यपेक्षयाऽष्टाविंशत्यक्षराणि शिष्यन्ते । तेषां कुत्रावापः इति ज्ञातव्यः । एवं प्रकृतौ ज्यायसि छन्दसि विद्यमानस्य साम्नः प्रयोगकाले कनीयसि छन्दसि गातव्यत्वेन विधिरस्ति यथा 'अभित्वाशूरनोनुमः' इति षट्त्रिंशदक्षरायां बृहति गीयमानरथन्तरं साम "कवतीषुरथन्तरं गायेदिति" चतुर्विंशत्यक्षरायां गायत्र्यां विधीयते । तत्र प्रकृत्यपेक्षया द्वादशाक्षराणि न्यूनानि । तेषां कुत उद्वाप इत्यादिकं सम्यक् ज्ञात्वैव प्रयोक्तव्यं । स्वरभेदे वर्णव्यत्यये वा महान्दोषः स्मर्यते ।

प्रहीणः स्वरवर्णाभ्यां योवैमन्त्रः प्रयुज्यते ।
यज्ञेषु यजमानस्य रुशत्यायुः प्रजाः पशून् ॥ ना-शिक्षा

इति स्वरवर्णविपर्यासे यज्ञकर्तुर्यजमानस्यायुःप्रजापश्वादिकं क्षीयते इत्युक्तम् । अतएव लक्षणकारैः सूत्रकारैश्च स्वर-विशेषाणां आवापोद्वापविधानं विस्तरशः क्रियते । तथापि तादृश लक्षण ज्ञानस्य प्रयाससाध्यत्वात् अर्वाचीनैः सुलभतया प्रयोगकरणाय कारुणिकैर्लक्षणविचक्षणैः यस्मिन् यागे यादृश गानानि ब्राह्मणसूत्रकारैर्विधीयन्ते तस्मिन् तादृशान्येव गानानि लक्षणानुसारेणैव विरच्योहरहस्यग्रन्थत्वेन प्रचुरतां नीतानि। इदानीं मुद्रापणेनापि प्रथां प्रापितानि ।

प्रकृतेर्यथा सप्तगानानि, तथा ऊहस्यसप्ततन्त्राणि सन्ति। तन्त्राणां नामधेयानि पूर्वमुक्तानि। तेषां प्रवृत्तिनिमित्तमि-दानीं विचार्यते। तन्त्राणां प्रवृत्तिनिमित्तं यागएव ।

"दशरात्रम्"

अस्ति च द्वादशरात्राख्यः क्रतुः अहीनसत्रयोःप्रकृति भूतः। तत्र प्रथमान्तिमाहनी प्रायणीयोदयनीयातिरात्रसंज्ञके भवतः, मध्यस्थानि दशाहानि सन्ति। तेषु प्रयुज्यमानानि स्तोत्राणि यत्र गीयन्ते तत् दशरात्रम्। तत्र प्रथमतः विंशद्वये अग्निष्टोमप्रभृत्यतिरात्रपर्यन्तानि स्तोत्राणि गीयन्ते। ततः पर-

मेव द्वादशरात्रस्तोत्राणि सन्ति। तथापि द्वादशरात्रस्तोत्राणां बाहुल्यात् दशरात्रसंज्ञोपपद्यते।

## संवत्सरपर्व

सत्रेषु संवत्सरसाध्याः क्रतवो विद्यन्ते। तत्र यानि स्तोत्राणि ब्राह्मणसूत्रयोर्विधीयन्ते तानि गीयन्तेऽत्र। अतः संवत्सरसंज्ञा। सौमिकचातुर्मास्यस्तोत्राण्यत्र विद्यन्ते।

## एकाहपर्व

एकाहसुत्याकानां यज्ञानां स्तोत्राणि अत्र गीयन्त इति एकाहसंज्ञा।

## अहीनपर्व

अहर्गणसाध्यक्रतवो बहवो विद्यन्तेद्व्यहप्रभृतयः। तत्र विधीयन्ते यानि स्तोत्राणि तान्यत्र गीयन्तइत्यहीनत्वमस्य पर्वणः। अहर्गण साध्यानां क्रतूनां अहीनत्वसंज्ञा। ते च क्रतवः एकयजमानकाः बहुयजमानकाश्च। तत्रार्त्विज्यकरणेदोषोऽपि स्मर्यते। अत एवाग्निष्टोमादिषु ऋत्विग्वरणकाले 'कच्चिन्नाहीन' इति पृच्छन्ति ऋत्विजः।

## सत्रम्

सत्राणि बहूनि विधीयन्ते गवामयनादीनि। तेषांबहुयजमानकत्वं नियतम्। सत्रेषु अहर्गण साध्यानि बहुमाससाध्यानि संवत्सरगणसाध्यानि सहस्रसंवत्सरसाध्य विश्वसृजामयनपर्यन्तानि विधीयन्ते महाब्राह्मणे। अहीनानां अहर्गण साध्यत्वेऽपि सत्रस्य बहुयजमानकत्वं नियतम्। अहीनस्य एकयजमानकत्वं बहुयजमानकत्वमुभयमपि वर्तते इतिविशेषः, सत्रे प्रयुज्यमानानि स्तोत्राणि विद्यन्ते यत्र तत् सत्रसंज्ञकंपर्व।

## प्रायश्चित्तम्

यज्ञेषुक्रियमाणेषु ऋक्तः यजुष्टः सामतश्चविभ्रंशोऽनेकविधो जायेत।तेषां समीकरणाभावे यज्ञः विपरीतफलः तत्र संबद्धानां क्लेशावहश्च स्यात्। अतः प्रायश्चित्तेन तेषां परिहारः आवश्यकः। तादृश परिहार विधायकानि कर्माणि आश्वलायनापस्तंबद्राह्यायणादिषुसूत्रेषु विद्यन्ते। तत्र स्तुति साधनत्वेनविहितानि यानिसामानि तान्यत्र विद्यन्ते। प्रायश्चित्तार्थत्वात्तेषां प्रायश्चित्तमिति संज्ञा॥

## क्षुद्रम्

शत्रुनाशार्थं विधीयमानाः आभिचारिकक्रतवः बहवस्सन्ति, श्येनः, इषुः वज्रः, इत्यादयः। तेषु प्रयुज्यमानानां स्तोत्राणां पाठः अस्मिन् पर्वणि विद्यत इत्यस्य क्षुद्रमिति संज्ञा ॥

ऊह्यरहस्ययोस्समग्रतयाविनियोगः यज्ञकर्मण्येव। यागशालायां सदः इति किंचनस्थानंवर्तते। तत्रोपविशन्तः उद्गातृप्रस्तोतृप्रतिहर्तारः अध्वर्युप्रेषिता होतृभिरनुमताःस्तोमयोगपूर्वकं स्तुवन्ति। स्तोमयोगो नाम ऋषिश्छन्दोदेवता, विनियोजकब्राह्मण, सप्तस्वर देवता, स्तोत्रफलप्रतिपादकं वाक्यम्। तच्च उद्गातृभिः मिळित्वा प्रयोज्यम्। उद्गातारः स्वस्व देवतानुस्मरणपूर्वकं स्वां स्वांभक्तिं अनुछ्वसन्तः प्रयुञ्जते ॥ भक्तिर्नाम साम्नां भागः। साच भक्तिः पंचविधा। प्रस्तावः, उद्गीथः, प्रतिहारः, उपद्रवः, निधनम् इति, तेषां संज्ञा। क्रतुषु प्रयोगकाले प्रस्तावात्पूर्वं हिंकारं उद्गीथात्पूर्वं ओंकारं च गातव्यम्, अतः सप्तभक्तयइत्यपि क्वचित् व्यवहारो वर्तते। एतदधिकृत्य पंचविधसूत्र, द्राह्यायण सूत्र, छान्दोग्योपनिषद्विवरणसमये प्रस्तोष्यते।

ऊहगाने सप्तस्वपि तन्त्रेषु [पर्वसु] साम्नां संख्या एवम्।

| | | प्रपाठकाः | विंशाः | सामसंख्या |
|---|---|---|---|---|
| 1) | दशरात्रम् | 5½ | 11 | 222 |
| 2) | संवत्सर पर्व | 3½ | 7½ | 152 |
| 3) | एकाह पर्व | 4 | 8 | 158 |
| 4) | अहीनपर्व | 4 | 7½ | 146 |
| 5) | सत्रम् | 3 | 6 | 121 |
| 6) | प्रायश्चित्तम् | 1 | 2½ | 50 |
| 7) | क्षुद्रम् | 2 | 4½ | 87 |
| | | 23 | 47 | 936 |

"रहस्यम्"

| | दशतिः | साम |
|---|---|---|
| दशरात्रम् | 3 | 29 |
| संवत्सर पर्व | 4 | 41 |
| एकाह पर्व | 2 | 23 |
| अहीनपर्व | 3 | 31 |
| सत्रम् | 1 | 14 |
| प्रायश्चित्तम् | 2 | 19 |
| क्षुद्रम् | 5 | 52 |
| | 20 | 209 |

ऊहरहस्यस्थसामानि — 1145, प्रकृतिसामानि — 1494 आहत्य—2639. सामवेदे, पंचसप्तत्यधिकाष्टशतोत्तर सहस्र-संख्याकाऋचइत्युक्तम्। ताश्चप्रायशः ऋग्वेदस्था एव। सामवेद-एव केवलंदृश्यमानाः एकोनशतं ऋचः वर्तन्ते॥

## ॥ सामवेदमात्रस्था ऋचः ॥

आग्नेयं पर्व

1. अग्नेविवस्वदाभर
2. आजुहोता
3. यदिवीरोअनु
4. जातःपरेण
5. इतएत उदारुहन्
6. राये अग्ने महेत्वा

ऐन्द्रंपर्व

7. सोमः पूषा
8. येतेपन्थाः
9. दोषो आगात्
10. कइमंनाहुषीषु
11. सदावइन्द्रः
12. अरन्तइन्द्र
13. इमेतइन्द्रसोमाः
14. कद्रुप्रचेतसे
15. इन्द्र उक्थेभिः
16. एन्द्रपृक्षुकासुचित्
17. यदा कदाचमीढुषे
18. इमइन्द्रमदायते
19. यदिन्द्रशासो अव्रतम्
20. त्वष्टानोदैव्यम्
21. कुष्ठःकोवा
22. ब्रह्मजज्ञानम्
23. मेडिं नत्वा
24. यो नो वनुष्यन्
25. यं वृत्रेषु
26. आनो वयो वयः
27. यदी वहन्त्याशवः
28. कश्यपस्य स्वर्विदः
29. ऋचं साम यजामहे ।
30. समेत विश्वाः
31. आविर्मर्याः
32. विश्वतोदावन्
33. एषब्रह्मा
34. शंपदंमघम्
35. सदागावः
36. उपप्रक्षे
37. अर्चन्त्यर्कम्

38. प्रवइन्द्राय
39. भगोनचित्रः
40. विश्वस्यप्रस्तोभ
41. विस्रुतयः
42. ऊर्जामित्रः
43. इन्द्रोविश्वस्य
44. अयंसहस्रमानवः
45. अभित्यंदेवम्

आरण्यंपर्व

46. यस्येदमारुजः
47. इमंवृषणम्
48. अहमस्मिप्रथमजाः
49. मयिवर्चः
50. आप्रागात्
51. यशोमाद्यावापृथिवी
52. भ्राजन्त्यग्ने
53. वसन्तइन्नु
54. मन्येवाम्
55. हरीतइन्द्र
56. यद्वर्चः
57. सहस्तन्नः
58. सहर्षभाः
59. विद्मामघवन्
60. अभिष्टिभिः
61. एवाहिशक्रः
62. विद्माराये
63. योमंहिष्ठः
64. ईशेहिशक्रः
65. इन्द्रन्धनस्य
66. पूर्वस्ययत्ते
67. प्रभोजनस्य
68. एवाह्येऽव

उत्तरार्चिके

69. इन्द्रजुषस्व
70. इन्द्रजठरम्
71. इन्द्रस्तुराषाट्
72. पावमानीः स्वस्त्ययनीः
73. पावमानीर्दधन्तुनः
74. येनदेवाः
75. पावमानी स्वस्त्यनीस्ताभिः
76. अग्नेविश्वेभिः
77. प्रसविश्वेभिः
78. सुमन्मावस्वी
79. सरूपवृषन्

| | | | |
|---|---|---|---|
| 80. | नीवशीर्षाणि | 90. | पुनरुर्जा..., |
| 81. | ऋतावानम् | 91. | सहरय्या |
| 82. | यद्दद्यंप्रति | 92. | अभिवाजी..., |
| 83. | अग्निःप्रियेषु | 93. | अप्सुरेतः, |
| 84. | त्वामिच्छवसः | 94. | अयंसहस्र, |
| 85. | अग्निरिन्द्राय | 95. | असौयासेना..., |
| 86. | नमस्सखिभ्यः | 96. | कंकास्सुपर्णाः |
| 87. | युंजेवाचम् | 97. | अमित्रसेनां |
| 88. | गायत्रम् | 98. | इन्द्रस्यबाहू..., |
| 89. | अग्निर्ज्योतिः, | 99. | अन्धा अमित्राभवत..., |

एतावता आर्चिकगानरूपोमन्त्रभागोनिरूपितः ॥

॥ अथ ब्राह्मणभागः ॥

ब्राह्मणभागमधिकृत्येदानीं विचारयामः ॥

अष्टविधं ब्राह्मणमिति पूर्वमुक्तम् ॥ तत्रादिमं ब्राह्मणमिति प्रथितस्य तण्डिना महर्षिणा दृष्टत्वात् ताण्ड्यमिति, ब्राह्मणान्तरापेक्षया महत्वात् पंचविंशत्यध्यायात्मकत्वाच्च महदिति, प्रौढमिति पंचविंशमिति च नामास्य संपन्नम् । अत्र ब्राह्मणे बहवोयागाः विहिताः । यागाश्च दर्वीहोमेष्टिपशुसोमभेदेनविभक्ताः । तत्र प्रतिदिनं सायं प्रातः पयआदिद्रव्यैः क्रियमाणो होमः

अग्निहोत्राख्यः, एतादृशश्चान्योहोमः दर्वीहोमसंज्ञकः । एव प्रतिपर्वसमारभ्य प्रतिमासंकालद्वयेक्रियमाणायागविशेषा इष्टिपद-वाच्याः । ताश्च इष्टयः पुरोडाशेन चरुणा, दध्ना, अन्यैश्चा-पिद्रव्यविशेषैः निर्वर्त्यन्ते । प्रतिवर्षर्तु, कालान्तरेवा, पशोर्हृदया-दिभिरंगैर्निर्वर्त्यमानोयागः पशुशब्दवाच्यः । प्रतिवर्षं वसन्ते अन्यस्मिन् वा काले सोमाख्यां लतां क्रीत्वाऽभिषुत्य तद्रसं ग्रहचमसादि विहितपात्रेषु यथाविधिपूरयित्वातत्तद्देवताभ्यः विधिना प्रदीयते यत्र स सोमयागः ।

## प्रकृतिविकृतिभावः

यस्य कर्मणस्सन्निधौ तदपेक्षितांगकलापास्सकलाः विधी-यन्ते सा प्रकृतिः । यस्यसमीपे वैशेषिकाण्येवांगानि विधीयन्ते, सामान्यांगानि तु सादृश्यादिना अतिदिश्यन्ते सा विकृतिः । तत्र दर्वीहोमानां प्रकृतिः अग्नीहोत्रहोमः, इष्टीनां प्रकृतिः दर्शपूर्ण-मासेष्टी । पशूनां प्रकृतिः अग्निषोमीयपशुः । सोमानां प्रकृतिः अग्निष्टोमः । इष्टीनां इष्ट्यन्तरांगत्वं पश्वंगत्वं, सोमांगत्वं च संभवति । पशूनां सोमांगत्वमेव, न पश्वन्तरांगत्वं नेष्ट्यंगत्वं वा । सोमा अपि सोमान्तरांगानि भवन्ति न पश्वंगानि, नापीष्ट्यंगानि ।

अग्निहोत्रहोमः यजुर्वेदविहितएव सर्वैरनुष्ठीयते। दर्शपूर्णमासादीष्टयः, पशुयागाश्च ऋग्वेदयजुर्वेदाभ्यां विधीयन्ते। सोमयागस्तु वेदत्रयेणविधीयत इति सोमएववेदत्रयविदां षोडशर्त्विजामुपयोगः॥

| ॥ ऋग्वेदीयाः ॥ | ॥ यजुर्वेदीयाः ॥ |
|---|---|
| 1) होता। | 1) अध्वर्युः |
| 2) मैत्रावरुणः। | 2) प्रतिप्रस्थाता। |
| 3) अच्छावाकः। | 3) नेष्टा। |
| 4) ग्रावस्तुत्। | 4) उन्नेता। |
| इति होतृगणः। | इत्यध्वर्युगणः। |

॥ सामवेदीयाः ॥

| | |
|---|---|
| 1) उद्गाता। | 1) ब्रह्मा |
| 2) प्रस्तोता। | 2) ब्राह्मणाच्छंसी |
| 3) प्रतिहर्ता। | 3) आग्नीध्रः। |
| 4) सुब्रह्मण्यः। | 4) पोता |
| इत्युद्गातृगणः | इतिब्रह्मगणः। |

ऋग्वेदविहितकर्मानुष्ठातारः होतारः होतृगणइतिवा-कथ्यन्ते। यजुर्वेद विहित कर्मानुष्ठातारः अध्वर्यवः, अध्वर्युगण इति वा कथ्यन्ते। सामवेदविहित कर्मानुष्ठातारः उद्गातारः उद्गातृ-गण इति वा कथ्यन्ते। यागस्यांगकलापानां बहुत्वात् न्यूनाति-

रेकदोषाभवेयुः । तदसंभवाय निरीक्षणार्थं वेदत्रयविदः ऋत्विजः ब्रह्माणः ब्रह्मगणइतिचोच्यन्ते । तत्र पशुपर्यन्तेषु साम्नां विनियोगोनास्ति आधानंविना । सोमेपरं वेदत्रयोपयोगः । तादृश सोमयागाः अग्निष्टोमप्रभृति, विश्वसृजामयनपर्यन्तं अष्टसप्तत्यधिकशतसंख्याका अत्र विहिताः । एतदनुसृत्यैवापस्तम्बकात्यायनप्रभृति श्रौतसूत्रकाराः क्रतून् विहितवन्तः । तथाचापस्तम्ब श्रौतसूत्रे 'इतिच्छन्दोगब्राह्मणं भवति, (10,13, 35) 'इतिताण्डयकं, (21.16) इत्यादौ, इदं ब्राह्मणम् प्रमाणतयोदाह्रियते ।

श्रौतसूत्राणां स्मृतिरूपत्वात् तन्मूलभूताश्रुतिः काचन अपेक्ष्यते । साच श्रुतिः एकाहप्रभृति सहस्रसंवत्सरपर्यन्तानां बहूनां यागानां क्रमेणात्रविधानात् , इयमेवेतिमत्वा कात्यायन महर्षिरन्यूनानतिरिक्ततया एतद्ब्राह्मणोक्तास्संख्याः क्रमांश्च क्वचिदतिसूक्ष्ममंशं विहायासूत्रयदात्मीये श्रौतसूत्रे । आपस्तंबमहर्षिस्तु तैत्तिरीयशाखोक्तान्प्रथमतोऽभिधाय, तत्रानुक्तान्विषयानेतत्क्रमेणैवासूत्रयत् ॥ आपस्तम्बश्रौतसूत्रे बहूनि वाक्यानि ताण्डयस्थानि दृश्यन्ते ॥ तान्यत्रज्ञाप्यन्ते ।

| ताण्डयस्थवाक्यम् | | | आपस्तम्ब श्रौतसूत्रे | | |
|---|---|---|---|---|---|
| अध्या | ख | ब्रा | प्रपा | ख | सू |
| 1 | 1 | 1 | 10 | 1 | 4 |
| 1 | 1 | 4 | 10 | 1 | 5 |
| 1 | 1 | 2-3 | 1 | 1 | 6 |
| 22 | 3 | 1 | 22 | 22 | 9 |
| 22 | 4 | 1 | 22 | 22 | 14 |
| 23 | 13 | 1 | 23 | 2 | 18 |
| 24 | 7 | 1 | 23 | 6 | 6 |
| 25 | 4 | 4 | 23 | 10 | 11 |
| 25 | 7 | 3 | 23 | 11 | 11 |

एतेषु स्थलेषु वाक्यान्युभयत्र समान रूपाणि दृश्यन्ते अतः इदं ब्राह्मणं प्रमाणतयोपात्तमिति वक्तुं शक्यते ॥

अस्य ब्राह्मणस्य भाष्यग्रन्थेषु विभाजक धर्मः अध्यायत्वेन व्यपदिश्यते। ग्रन्थान्तरेतु प्रपाठकत्वेनापि दृश्यते। प्रपाठक-पञ्चकमवलम्ब्य, एकापञ्चिका इत्यपि व्यवहारो दृश्यते, यथैतरेय ब्राह्मणे। एवंच पञ्च पञ्चिकात्मकमिदंब्राह्मणम्। एतच्छेषः षड्विंशब्राह्मणम्।

## ताण्ड्यस्थविषयसंग्रहः

### ॥ प्रथमाध्याये ॥

उद्गातुः, आर्त्विज्यांगीकारमन्त्रः देवयजनहविर्धान प्रवेश द्रोणकलशावस्थापनमन्त्राः प्रवृत्तहोमोपवेशनादिमन्त्राः, धिष्ण्योपस्थापनमन्त्राः, स्तोमयोगचमसभक्षणदक्षिणाप्रतिग्रह यज्ञपुच्छोपयोगिमन्त्राः पठ्यन्ते।

### ॥ द्वितीयतृतीयाध्याययोः ॥

स्तोमप्रकाराः निरूप्यन्ते। स्तोमो नाम उद्गातृभिः क्रियमाणानां गुणिनिष्ठगुणाभिधानरूपानां स्तोत्राणां संख्या। स च त्रिवृत्पञ्चदशसप्तदशैकविंश त्रिणव त्रयस्त्रिंश चतुर्विंश चतुश्चत्वारिंशाष्टाचत्वारिंशभेदेननवप्रकारः। तत्रैकैकस्मिन् स्तोमे पर्यायत्रयं विद्यते। एकैकस्मिन् पर्याये विष्टुतित्रयं-विद्यते। साच बहुप्रकारा। पर्यायस्थस्तोत्राणां इयत्तागणनार्थं काष्ठविशेषो वर्तते। तस्य कुशेति नाम। कुशा प्रादेश मात्रा, कुशवत् उन्नतपृष्ठा तक्षणेन संस्कृता, तीक्ष्णाग्रा, औदुम्बर वृक्षीयाच स्यात्। सा च स्तोत्रे प्रारभ्यमाणे प्रस्तावभक्त्यन्ते प्रस्तोत्रा कुशास्तरणाख्यवस्त्रविशेषे प्रागग्रा, उदगग्रा वा, निधीयते। कुशाविधानप्रकाराः प्रदर्श्यन्ते।

त्रिवृत्



पंचदशः



सप्तदशः



एकविंशः



त्रिणवः



त्रयस्त्रिंशः



चतुर्विंशः



चतुश्चत्वारिंशः



अष्टाचत्वारिंशः



एवं नवप्रकारेषु अनेके भेदाः सन्ति। तत्सर्वं विष्टुति भेद, फलभेद, प्रदर्शनपूर्वकं सम्यक् प्रतिपादितम्।

॥ चतुर्थाध्याये ॥

गवामयनाख्यः क्रतुः विहितः। सचद्वादशमाससाध्यः। द्वादशसुमासेषुप्रथमान्त्याहनी प्रायणीयोदयनीयातिरात्रे। मध्ये यावन्त्यहानि तेषु अभिप्लवषडहपृष्ठ्यषडहानां ज्योतिर्गौरादीनां च क्रमविधानम्। विषुवदाख्य प्रधानाहर्विधानम्। स्वरसाम्नां विधानम्। महाव्रताख्यमहः। तेषां स्तोमविधानम्। गवामयनशब्दार्थः, उपस्थानादि च विधीयते।

॥ पंचमाध्याये ॥

महाव्रतहोतुःपृष्ठस्यपंचविधत्वम्। प्राणादिसाम्ना आहवनीयाद्युपस्थानम्। स्तोत्रकाले यजमानपत्नीनां वीणागानम्। वीणायाः शततन्त्रीत्वकथनम्। उद्गातुः स्तोत्रकाले औदुम्बरीमासन्दीमास्थायगानम्। इलान्दसाम्नः समुद्रत्वकथनम्। अध्वर्य्वादीनामपि आसनविशेषेऽवस्थाय स्तोत्रोपाकरणादि। गवामयनस्य दीक्षाकालः।

॥ षष्ठाध्याये ॥

सर्वप्रकृतिभूतस्याग्निष्टोमस्योत्पत्तिः। द्रोणकलशस्योत्पत्तिः। तदध्यूहनम्। अग्निष्टोमस्य ज्योतिष्टोमत्वमपि

कथं ? इत्यादिशंका, समाधानम् । बहिष्पवमानार्थं पंचर्त्विक्प्रसर्पणम् । प्रस्तोत्रादीनांसर्पणे विच्छेदे प्रायश्चित्तविधानम् । बहिष्पवमानस्तोत्रसंख्या, तत्रोत्तमस्तोत्रीयायाः रथन्तरवर्णत्वं, तत्र हिंकारस्य प्राशस्त्यम् । काम्यप्रतिपत् । दीक्षितमरणे, अनृताभिशस्तस्यप्रयोगे, द्वियजमानकप्रयोगे च, प्रतिपद्विधानमित्यादयः ।

॥ सप्तमाष्टमाध्याययोः ॥

बहिष्पवमानगाने, प्रतिहारः अनिरुक्तगानं, निधनानि च, विधीयन्ते । आज्यस्तोत्रम् । तत्र देवता । माध्यन्दिनपवमानस्यविधिः । पृष्ठस्तोत्रम् । रथन्तरसाम, तस्य त्रैष्टुभत्वसंपादनम् । आमहीयवादीनां विधानम् । बृहद्रथन्तरयोः प्रस्तावप्रतिहारविचारादि । वामदेव्य, वैराज, शाकर, रैवतानां, स्तोत्रधर्माः । ब्रह्मसामविचारः, तस्यकामनाभेदेन सामविधानम् । आर्भवपवमानस्तोत्रे साम्नांविधानं, यज्ञायज्ञीये नियमविधानम् । उक्थस्तोत्रम् । तत्र साकमश्व, सौभर, नार्मेध, हारिवर्णानां विधानम् । उद्वंशीयाष्टादंष्ट्रयोः कामनाभेदेनविधानम् । सौभरस्य निधनभेदेन, फलभेद इत्यादीनि प्रतिपाद्यन्ते ।

॥ नवमाध्याये ॥

अतिरात्राख्यः क्रतुः। उक्थ्य स्तोत्रानन्तरं पञ्चदशस्तोमकरात्रिपर्यायाणां त्रयाणां स्तवनं, ततः संधिस्स्तोत्राणि। ततः आश्विनशस्त्रम्, ततः यज्ञपुच्छम्, अवभृथइति। तत्र रात्रिपर्यायसंज्ञक स्तोत्राणां विधानम्। तस्य प्रशंसा सन्धिस्तोत्रे कामना भेदेन सामविधानम्। आश्विनशस्त्रं प्रभातात्पूर्वं समापनीयम्। एकत्र उभयोः यजमानयोः यागकरणे प्रातरनुवाकोपाकरणकालः। सोमलतायाः अलाभेपूतीकलताग्रहणम्। तस्याः अलाभे, अर्जुनाख्यतृणविशेषेणसोमयागः कार्यः। सोमापहरणे द्रोणकलशभेदने सोमातिरेके सत्रयागमध्ये कश्चिद्यजमानः यदिमृतः तदा प्रायश्चित्तम्। महावीरभेदने यूपस्यप्ररोहे च प्रायश्चित्तम्।

॥ दशमैकादशद्वादशाध्यायेषु ॥

व्यूढद्वादशाहाख्यः अहीनसत्रोभयात्मकः क्रतुः। तत्र मध्य वर्तिषु दशसु अहस्सु प्रतिदिनं सोमयागः। तत्र त्रिवृत्प्रभृति, अष्टाचत्वारिंशस्स्तोमपर्यन्तं सर्वे स्तोमाः प्रयुज्यन्ते। तेषां सृष्टिः, प्रशंसा, गायत्र्यादीनां च सृष्टिप्रकारः। द्वादशरात्राधिकारि प्रतिपादनम्। दीक्षाफलम्। तदन्तर्गतस्य ज्योतिष्टोमस्य ज्योतिष्ट्वं, तदन्तर्गतस्तोत्राणां नवतिशतसंख्याकानां दशसंख्यया

विभागे, दश शिष्यन्ते। दशाक्षरस्य विराट्त्वं "दशाक्षरा-विराट्, इति श्रुत्या ज्ञायते, विराट्, छन्दसांमध्ये ज्योतिः। अतः ज्योतिष्टोमत्वमित्यादि।

तत्रैव द्वादशरात्रक्रतौ एकैकस्मिन्नहनि, बहिष्पवमानाज्य-पृष्ठार्भवपवमानादीनां सामविधानम्। पृष्ठयषडहस्य धर्माः, तत्र पृष्ठस्तोत्राणां कुत्र, कस्यधर्मस्य प्रवृत्तिरित्यादि, तत्रैव उक्थ्यसंस्थया समाप्तिः। षोडशिस्तोत्रविधानमित्यादि प्रति-पाद्यते।

।। त्रयोदशचतुर्दशपञ्चदशाध्यायेषु ।।

द्वादशरात्रक्रतोरेव पञ्चमदिनप्रभृति स्तोत्राणां साम विधानम्। तत्र विकल्पाः, फलभेदाः, स्तोमविधानम्। दशम-महः अविवाक्यसंज्ञकम्। तत्र बहवो धर्माः निरुप्यन्ते। साम्नां स्तोत्रेणफलविशेष प्रदर्शनम्। गायत्र्यादीनां छन्दसां प्रयोगेण तत्तत्संपत्तिः। अन्तिमस्तोत्रस्य विराट्छन्दस्कस्य वामदेव्यस्य प्रशंसा। तत्र त्रयस्त्रिंशदक्षरेषु गायत्र्यादीनां छन्दसां सत्वम्। तत्स्तोत्रेण पूर्यते। अतः सर्वकामसिद्धिः। एवं द्वादशरात्रस्य पूर्तिः।।

॥ षोडश सप्तदशयोः ॥

त्रिकद्रुकाख्यानां त्रयाणां यागानां विधानम्। तत्र ज्योतिराख्यः प्रथमः ज्योतिष्ट्वं तस्य कथमिति निर्वचनम्। प्रपञ्चसृष्टिकर्ता प्रथमतः सर्जनार्थं प्रवृत्तः। तमसाऽवृतत्वात् न किंचन प्रत्यभात्। अनन्तरं तपसा एतद्यागं अपश्यत्। सपदि तमो विनष्टं। ज्योतीरूपेणानेन तमोनाशात् अस्य ज्योतिष्ट्वम्। एवं गौः, आयुरिति द्वौ यागौविधाय, एतेषां त्रयाणां स्तोत्रसामविहितम्। त्रिवृदादि निवेशः दक्षिणाविधिः तस्य स्तुतिः। अनन्तरं अभिजिद्विश्वजित् सर्वजिद्यागानां विधानम्। सर्वस्वदक्षिणाकत्वात् विश्वजितः तत्र नियमविशेषान्दर्शयति। त्रयाणं फलविशेषः। ततस्सहस्रदक्षिणाकानां चतुर्णां विधानम्। पञ्चानां साद्यस्क्राणां चतुर्णां व्रात्य यज्ञानां विधानम्। ये स्वाश्रम विहित कर्मानुष्ठातारः, ये निषिद्ध कर्मानुष्ठातारः, ते व्रात्याः तेषामत्राधिकार इति, प्रतिपादनम्। अथ पञ्चानां अग्निष्टुवां तत् फलानांस्तोमानां च विधानम्। ततस्त्रिवृतां त्रयाणां। ततः सौमिकचातुर्मास्याख्यः पर्वचतुष्टयविशिष्टः सेतिकर्तव्यताको विधीयते।

॥ अष्टादशैकोनविंशाध्याययोः ॥

उपहव्यादयः वाजपेयः, राजसूयः एतेऽत्रविहिताः। वाजं अन्नं, पेयं द्रवात्मकं, उभयमपि प्रजापतिरेतेन प्राप्नोत्। अतः प्रजापतिना प्रथममनुष्ठितत्वात् प्राजापत्यं पदं अन्नाद्यप्राप्तिश्चास्य-फलम्। ततः राजसूयः। राजसूये क्षत्रियोऽधिकारी। सप्त-सोमयागाः तत्र सन्ति। तेषु स्तोत्र सामानि, दक्षिणाविशेषः, फलविशेषश्च प्रतिपाद्यते। अनन्तरम् राट्, विराट्, उद्भित्, बल-भित् इत्यादि द्वन्द्वक्रतवः। तेषांसेतिकर्तव्यताकानां विधिः। द्वन्द्वेषु समानकर्तृकत्वं। अस्मिन्नेकोनविंशाध्याये, तादृश द्वन्द्वा अतादृशाश्च पुनस्तोमादयः विधीयन्ते। उपनयनस्य यागस्य वा अनर्हान् उपनीय, याजयित्वावा, प्रकारान्तरेण निषि-द्धद्रव्यप्रतिग्रहादिना वा नरकभीताः तादृशदोषनिर्हरणार्थं तैः क्रियमाणोऽयं पुनस्तोमाख्यः। तस्य स्तोत्राणि तत्र शुद्धाशुद्धीय साम्नः महिमा, “इन्द्रो यतीन् सालावृकेयेभ्यः प्रायच्छत्” इत्या-दिना प्रदर्शितः। एवमेकोनविंशाध्याये एकोनविंशतिर्यागाविहिताः।

॥ विंशैकविंशद्वाविंशाध्यायेषु ॥

अतिरात्र संज्ञकाबहवः क्रतुविशेषाः विधीयन्ते। प्रथमं ज्योतिष्टोमातिरात्रस्य स्तोमक्लृप्तिः। तत्र ऋद्धिकामोऽधिकारी

तत्प्रशंसा ततः सर्वस्तोमातिरात्रः । तत्र स्तोमविशेषः अधिकारी ऐश्वर्यकामः । अनन्तरं अप्तोर्यामः, तस्य सर्वकामावाप्तिः फलम् । ततः अतिरात्र क्रतवः । गर्गत्रिरात्रस्य गोसहस्रं दक्षिणा, तस्याः विभागकथनम् । शबलीहोमाद्यङ्गविधानम् शबलीहोमस्य स्वातन्त्र्येणकर्तव्यत्वं विचार्य समाधीयते, मन्त्रार्थश्च विशदीकृतः । अश्वमेधाख्यः त्रिरात्रः । तत्र त्रिवृदादयः प्रथमेऽह्नि, द्वितीये, एकविंशस्तोमः, तृतीये सर्वेस्तोमाः । अश्वप्रशंसा । एकविंशतिः यूपाः । यूपानां वृक्षाः । पशूनां अवदानं शाखाविशेषविचारः । वैदत्रिरात्रादि त्रिरात्राणां विधानम् । चत्वारश्चतूरात्राः । तत्र स्तोमविधानम् । तत् प्रशंसा । त्रयः पञ्चरात्राः । त्रयः षट्रात्राः सप्त सप्तरात्राः । अथाष्टरात्राः । द्वौ नवरात्रौ । चत्वारः दशरात्राः । तेषां स्तोमविधानम् । स्तोत्र सामानि अधिकारी, फलम्, वेदनफलं च प्रतिपाद्यते । अन्ते पौण्डरीकविधानम् ।

॥ त्रयोविंशाध्याये ॥

द्वौ त्रयोदशरात्रौ तत्र स्तोमाः । प्रथमस्य ऋद्धिः द्वितीयस्य प्रतिष्ठा च फलम् । त्रयः चतुर्दशरात्राः । तेषां फलप्रशंसादिकम् । अनन्तरं पञ्चदशरात्रप्रभृति द्वात्रिंशद्रात्रपर्यन्तं यागविशेषाः ।

॥ चतुर्विंशाध्याये ॥

अत्र त्रयस्त्रिंशद्रात्रमारभ्य संवत्सरसाध्य सत्रपर्यन्तं क्रमेण विधीयन्ते। अनन्तांश्रियमाप्तुकामस्य एकोनचत्वारिंशद्रात्रंसत्रं चत्वारिंशद्रात्रं उत्तमराज्यकामस्य। अदितिपुत्राः अष्टौ सर्वांमृद्धिं यथा प्राप्ताः तद्वत् सर्वसमृद्धिफलं सत्रमित्यादि फल वचनेन सह सत्राणि बहूनि विधीयन्ते॥ अन्ते अमृतत्वसाधनं शतरात्रमभिधाय सर्वसत्र प्रकृतिभूतं गवामयनं सर्वकामसमृद्धिफलमिति प्रतिपाद्यते॥

॥ पंचविंशाध्याये ॥

आदित्यानामयनं स्वर्गसाधनम्। सर्वऋद्धि साधनं कुण्डपायिनामयनम्, तापश्चितामयनं, प्रजापतेर्द्वादशसंवत्सरसत्रम्। स्वर्गसाधनं शतसंवत्सर साध्यं सत्रं। एतादृशसत्राणां विधानम्, अन्ते विश्वसृजामयनं सहस्र संवत्सरसाध्यम्। तत्राधिकारी। स्तोमविधानम्। ब्रह्मणस्सायुज्यं फलम्। मनुष्याधिकारित्वाच्छास्त्रस्य सहस्रसंवत्सरपर्यन्तं नकेनापि जीवितुं शक्यत्वात् सहस्रदिनानि सत्रमनुतिष्ठेयुरिति मीमांसान्यायविचारपुरस्सरं अष्टौ पक्षान् प्रतिपाद्य अन्तिमंपक्षं प्रतिष्ठापितम् सायणभाष्ये। सभाष्यमिदं चौकंपासंस्कृतपुस्तकालयस्थैः काश्यां मुद्रापितम्॥

॥ एवंताण्ड्यब्राह्मणस्था विषयाः सूचिताः॥

क्रमप्राप्तं षड्विंशाख्यं द्वितीयंब्राह्मणमधिकृत्य निरूपयामः। आदिमस्य ब्राह्मणस्य प्रौढाख्यस्य पंचविंशमित्यपिनामान्तरमस्तीतिपूर्वमुक्तम्। तत्रानुक्ता येविषयास्तेषामत्र प्रतिपादनात् पंचविंशशेषस्यास्य षड्विंशइति संज्ञा उपपद्यते। अत्र पंचाध्याया अष्टाचत्वारिंशत्खण्डाश्च सन्ति।

॥ प्रथमाध्याये ॥

ज्योतिष्टोमादिषुयागेषु सुत्याहात्पूर्वं दिनत्रयं प्रवर्ग्याख्यं कर्म कृत्वा, उपसन्नामकेष्टिः क्रियते सायंप्रातश्च। उपसदन्ते सुब्रह्मण्याह्वानं, सुब्रह्मण्याख्येन ऋत्विजाक्रियते। तत्र साम्नि यद्यपि इन्द्रविशेषणानि सन्ति गौरावस्कन्दिन्नहल्यायैजार मघवन्नित्यादीनि, तथापि नात्रेन्द्रमात्राह्वानं इन्द्रमुखेन यागोद्देश्य सर्वदेवाह्वानमेव क्रियत इत्युपपाद्यते, "ब्रह्मचवा इदमग्रेसुब्रह्मचास्तां ततस्सुब्रह्मोदक्रामत्" इत्यादिना। सुब्रह्मपदेन इन्द्राभिन्नः आदित्यएवाभिधीयते 'असावादित्यस्सुब्रह्म' इत्युक्तत्वात्। "तस्यास्ते पृथिवीपादः अन्तरिक्षंपादः द्यौःपादः" इत्यादिनासार्वात्म्योपपादनात् तादृशादित्यस्यैवसर्वात्मत्वमभिधीयते। 'सूर्य आत्मा जगतस्तस्थुषश्च' इति मन्त्रोपि एतदेवाह। अन्ते च देवाः ब्रह्माण इति सामान्यतः देवान्, ब्राह्मणांश्च संबोध्य आग-

च्छत इति त्रिराह्वानात् देवानां, ब्राह्मणानां च सुत्यादिवसे हविर्दक्षिणाऽदानार्थे पृथगाह्वानं क्रियते। सुब्रह्मण्यमन्त्रः स्त्रीपुंनपुंसकरूपः ऋग्यजुस्सामरूपश्चेत्यभिधीयते। एतावद्विषयपरिज्ञानं सुब्रह्मण्याख्यस्य ऋत्विजः आवश्यकमिति "तस्मादेवंविदमेवसुब्रह्मण्यं कुर्वीत नानेवंविदमित्यादिना" प्रतिपाद्यते।

ततः 'एकच्छन्दः प्रातस्सवनं' इत्यादिना प्रातस्सवनस्यैकच्छन्दस्त्वं, माध्यन्दिनस्य त्रिच्छन्दस्त्वं आर्भवस्य पञ्चछन्दस्त्वं इत्यादिनातत्स्वरूपंनिरूच्य विश्वरूपागानप्रकारः 'तस्यप्रशंसा' ब्रह्मणः ज्ञातव्यविशेषाः, वेदत्रयसारत्वेन व्याहृतित्रयस्योत्पत्तिः, तिसृभिः व्याहृतिभिरेव त्रीन्लोकानुत्पादयामास ऋगादिवेदेषुमन्त्रविभ्रंशे, भूरादिव्याहृतिभिः होमः प्रायश्चित्तम्। हविषः स्कन्नप्रायश्चित्तम्। सौम्यचरुमधिकृत्यकेचनविषयाः तत्प्राशनमित्यादि कथ्यते।

॥ द्वितीयेऽध्याये ॥

अग्निष्टोमे बहिष्पवमानगाने ऋगक्षराणांस्थाने ओंकारविनिवेशंकृत्वा गातव्यम्। अस्य धूर्गानमिति संज्ञा। तत्र प्रतिस्तोत्रीयं भेदः स्तोत्रीयाणां रेतस्या इति संज्ञा तासु विशेषगानं, तेषां निर्वचनं धूर्गाने ज्ञातव्या बहवो विषयाः, होत्रादीनां अग्न्यादिरूपत्वं च सयुक्तिकं निरूपितम्। ततः उद्गातृचमसोत्कर्षः। वषट्कर्तुरपि न भक्षणम्। सवनत्रयेऽपि औद्गात्रोपहवः।

## ॥ तृतीयचतुर्थयोः ॥

होत्रादीनामृत्विजां मन्त्रेभ्रेषे यजमानस्य बहुविधदोषाः संभवन्ति। तेषां परिहारायप्रायश्चित्तहोमः। यदियजमानस्य यागानन्तरम् पशुपुत्रयोगक्षेमादिबाधास्यात् होत्रादिमन्त्रभ्रंशेनैव जातेति जानीयात् तदर्थंप्राय श्चित्तम्। ऋत्विजां देवत्वेन भावनं देवर्त्विग्वरणम्। देवयजनप्रार्थना [देवयजनं नाम, यागस्थलम्] देवयजनलक्षणं, "प्रागुदक्प्रवणं देवयजनं पश्चाद्दक्षिणाप्रवणं श्मशानकरणं"। यत्रजलेसिच्यमाने प्रांचं उदंचं वा दिशंप्रति सरति तत् देवयजनं, प्रत्यंचं दक्षिणां वा दिशंप्रतिसरणे तत्रशत्रुनाशार्थं आभिचारः कर्तव्यः। अन्यच्च, देवयजनं त्रिशुक्रियंस्यात्। "त्रिशुक्रियमितिह्याह"। "यस्यपुरस्तात् त्रीणिज्योतींषि दृश्येरन् अग्निराप आदित्यः तद्देवयजनं तत्त्रिशुक्रियम्"। देवयजनस्य प्राग्देशे आहवनीयाग्निः सूर्यश्च वर्तते तडागः कूपोवा यदिस्यात् तत् त्रिशुक्रियं इत्यादिलक्षणम्।

अवभृथसाम्नि विद्यमानानां पदानां निर्वचनं, तत्रवक्तव्याविशेषाः। अथशत्रुनाशनार्थं श्येनः, इषुः, सन्दंशः वज्रमित्याद्यभिचारक्रतवः, तत्र त्रिवृदादीनां विष्टुतिविधिः, द्वादशाहेवक्तव्याविशेषाः ततः त्रयोदशदिनसाध्यं वैश्वदेवसत्रम्, गार्हपत्यादीनां अग्नीनामुत्पत्तिप्रकारः। अग्निहोत्रहोमः पुत्रर्त्विगादि-

भिरपिकर्तुंशक्यते। ऋत्विगपेक्षया पुत्रस्य तदपेक्षया स्वस्य-होमे विशेषफलम्। अग्निहोत्रेण सर्वक्रतुफलं सिद्धयति। औदुम्बरीलक्षणं, तस्या देवतात्वेनानुसंधानम्। यूपलक्षणं। कामनाभेदेन द्रव्यविशेषाः "बैल्वं ब्रह्मवर्चसकामस्य, पालाशं पुष्टिकामस्य, क्रमुकाश्वत्थपाषाणायशस्कामस्य" इत्यादि। यूपस्य सर्वदेवतास्वरूपत्वं, ततः सन्ध्यादेवतायाः स्वरूपनिरूपणं, संध्योपासनस्य विशिष्टं फलम्। सन्ध्योपासनस्यकालः। स्वाहादेव्या उत्पत्तिप्रकारः। तस्या गोत्रादि, अक्षराणि तस्या एव पितृकार्येषु स्वधारूपेण, यज्ञेषु वषट्काररूपेणावस्थानमित्यादयोविषयाः।

॥ पञ्चमेऽध्याये ॥

अद्भुत शान्तिप्रकरणम्।

गृहे नगरे आलये, राजप्रासादे वा उत्पातदर्शनं प्रजानामकालमरणं दुःस्वप्न दर्शनं, इत्यादयोऽरिष्टविशेषाः अद्भुतानि, तेषां परिहाराय होमः गृह्याग्नौ क्रियमाणः स्थालीपाकरूपोऽत्र-विधीयतेसामजपश्च।

"अथातोऽद्भुतानां कर्मणां शान्तिं व्याख्यास्यामः पालाशानां समिधामष्टसहस्रं जुहुयात् ऐन्द्रयाम्य वारुण धानदाग्नेय-वायव्य सौम्यवैष्णवेत्यष्टौ, इत्यारभ्य स्वस्तिहास्य भवति, इत्यन्तं। एवं सामान्यतः कर्माणिविधाय तत्तदरिष्टसूचकानां

परिहारः प्रातिस्विकरूपेण प्रतिपाद्यते। देवाश्चवा असुराश्चैषु लोकेष्वस्पर्धन्त इत्युपाख्यानमुखेन, शत्रुविजयार्थं कञ्चनस्थालीपाकमनेकद्रव्यसाध्यं विधत्ते। ततः गृहे यदि वज्रवैदूर्यादयोमणयोविदीर्यन्ते राजकीयाधिकारिणासाकं विवादो वा जायते, यानशय्यासनादयो वा भज्यन्ते गजाश्वादयो वाऽकालेम्रियन्ते, एवमादयो यजमानस्यारिष्टसूचकास्तत्परिहारायेन्द्रदैवत्यः स्थालीपाकस्सामगानसहितः प्रतिपाद्यते। 'सप्राचीं दिशमन्वावर्ततेऽथ यदाऽस्य मणि मणिक कुम्भस्थलीविदरणमायासो राजकुल विवादोवा यानच्छत्र शय्यासनावसथ ध्वजपताका गृहैकदेश प्रभञ्जनेषु गजवाजिमुख्यावा प्रमीयाः प्रमीयन्ते, एवमादीनि इन्द्र दैवत्यानि अद्भुतानि प्रायश्चित्तानि भवन्ति। इन्द्रायेन्दो मरुत्वत इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति इन्द्रायस्वाहा शचीपतयेस्वाहा वज्रपाणयेस्वाहा ईश्वरायस्वाहा सर्व पाप शमनाय स्वाहेति व्याहृतिभिर्हुत्वाऽथ सामगायेत् इत्यादिना। एवं शरीरे व्याध्यादिपीडा, अतिस्वप्नमस्वप्नमित्यादीनि यमदैवत्यानि, क्षेत्र गृहसंस्थेषु धान्येषु आखुपतङ्गपिपीलिकादयः हिंसन्ति। एत दरिष्ट निवृत्यर्थं वरुण दैवत्यः, कनक रजत वरवस्त्रादयः वियुज्यन्ते कार्येषुप्रवृत्तिवैफल्यं पिशाचदर्शनम्, काकादीनां गृहमध्ये दर्शनं पृथिवीस्फोटन कम्पनादि, वृक्षेषु रुधिरस्रवणं देवालयस्थ देवतानां कम्पनं स्फोटनं, गवां शृङ्गेषु

धूमोत्पत्तिः रुधिरस्रवणं आदित्ये कबन्धदर्शनं गोषु मानुष-महिषादिजननं हीनाङ्गातिरिक्तांगविकृतरूप शिशुजननं पर्वत-स्फोटनं, अश्मप्लुवनं इत्यादीनिराष्ट्रजनताभय सूचकानि, तेषां परिहाराय धनदाग्निवायुसोमविष्णु रुद्रदैवत्यानि स्थालीपाक सामजपात्मकानि प्रायश्चित्तानिविधीयन्ते। अत्र देवता प्रतिपादनं तत्तदायुधोपेतत्वेन क्रियते, वज्रपाणये, दण्डपाणये, चक्रपाणये, शूलपाणये, इत्यादिना । अतः देवानां विग्रहवत्त्वप्रतिपादकस्यास्य वाक्यस्य प्रमाणान्तरेणानुवादबाधयोरभावात् भूतार्थप्रतिपाद-कत्वं वक्तव्यम्। प्रसंगात् देवानां विग्रहवत्त्वमपि श्रौतेनानेन प्रमाणेन सिद्ध्यति ॥ इदं च सायणभाष्यसहितं कल्कत्ताविश्वविद्या-लये, तिरुप्पतिकेन्द्रीय विद्यापीठे च मुद्रापितम् ॥

॥ तृतीयं सामविधान ब्राह्मणम् ॥

सामविधानाख्ये ब्राह्मणे पूर्वोक्तयज्ञेष्वनधिकारिण यज्ञकरणाशक्तानांच तत्तद्यागीय फलप्रेप्सूनां नियमविशिष्ट-तत्तत्सामजपेनैव तव, तत्फलसिद्धिरितिप्रतिपाद्यते। किं च सत्पुत्र लाभ दीर्घायुष्ट्वनैरुज्य गृहक्षेत्रारामपश्वादिसमृद्ध्यर्थं च होम-रूपाः जपरूपाश्च प्रयोगाविधीयन्ते। दुःस्वप्न दुष्प्रतिग्रहादि दोषनिवृत्तयेच सुलभसाध्य निष्कृतीर्विधत्ते। निर्दिष्टप्रयो-गेऽधिकार सिद्ध्यर्थं प्राजापत्यादि कृच्छ्रानुष्ठान विधिः काम्याना

मारंभकालः अन्येच नियमविशेषाः निर्दिश्यन्ते। अन्ते अपुनर्भवकामस्य रात्र्युपासनं च विधीयते। इदमध्यायत्रयात्मकं पंचविंशतिखण्डात्मकं च वर्तते। अस्य दृष्टादृष्टार्थतया साम्नां प्रयोग विधानात् सामविधानमिति संज्ञा। अत्रैव रुद्रपुरुष-सूक्तारिष्टपवित्रवर्गामृतसंहिता पितृस्वर्गसंहितादयः सूक्तविशेषा विधीयन्ते ॥

## प्रथमोऽध्यायः

जगदुत्पत्तेः पूर्वं शुद्धं ब्रह्मैवासीत्। ततः मायावशात् हिरण्यगर्भः विराट् ततः स्थूलप्रपंचः इत्याद्युत्पन्नम्। अनन्तरं उत्पन्नाः प्रजाः आहारार्थमरुदन्। प्रजापतिः जीवनसाधनत्वेन सप्तस्वरात्मकं साम तेभ्यः प्रायच्छत्। ततः क्रुष्टादिसप्तस्वरेण साम्ना प्रयुज्यमानेन देव मनुष्य गंधर्वाप्सरःपशुपित्रसुररक्षांस्योषधिवनस्पतयः स्थावरा अपि तृप्ता अभवन् इति प्रतिपाद्यते। ततः प्राजापत्यातिकृच्छ्रकृच्छ्रातिकृच्छ्राणिविधीयन्ते, अनन्तरं अग्न्याधान दर्शपूर्णमास चातुर्मास्याग्निष्टोमादि सप्तसंस्था गवामयन तापश्चितामयनादिसत्र यागानां फलसाधनानि सामानि सप्रयोगाणि विधाय अमृतसंहितास्वर्गसंहिता रुद्रविष्णु गणपतिस्कन्दपितृसूक्तानि विधीयन्ते। ततः प्रायश्चित्तप्रयोगाः। ब्रह्मस्वहरणे अगम्यागमने राजप्रतिग्रहे ब्राह्मणादिहिंसायां अनृत-

मदने अविक्रयविक्रये सूर्याभ्युदितसूर्याभिनिर्मुक्तत्वादौच प्राय-श्चित्तार्थतयासामजपः ।

॥ द्वितीयेऽध्याये ॥

काम्यानां दृष्टार्थानांप्रयोगारंभात् पूर्वं कृच्छ्रानुष्ठान पूर्वकं-त्रिरात्रमुपवासः पुष्यर्क्षेसमारंभः इति नियमः । शतवर्षायुस्सा-धन सामजपः, पापनिर्हरणार्थपवित्रवर्गः स्त्रीणां गर्भएवशिशु-मृतिदोषनिवारकसाधनं, सत्पुत्रप्राप्तिसाधनं, पिशाचब्रह्मराक्ष-सादि बाधा निवर्तकं, सर्वशस्त्र विषादिभयनिवर्तकं, अन्नलाभ साधनं, यात्रायां भये तन्निवर्तकं, स्त्रियाः पुरुषस्यचवशीकरणोपायः, सौभाग्यप्रदं सर्वजनप्रियंकरं, यशोब्रह्मवर्चसादिजनकं, राजसभायां जयप्रदं च सूक्तं, इत्यादयो विहिताः ।

॥ तृतीयेऽध्याये ॥

ऐश्वर्य धनधान्य लाभाय सामजपः, वास्तुहोमप्रयोगः, निधिदर्शनोपायः, अपुनर्भवसाधनं, देवताप्रत्यक्षोपायः, स्वेच्छया-गमन, त्रिलोकवशीकरणसाधनान्युक्त्वा एतद्ग्रन्थावतरणं, ब्रह्मा-बृहस्पये, स नारदाय, स व्यासाय, स जैमिनये, एवंरूपेणास्माक मागतमितिनिरूप्य गुरुदक्षिणा विधिमुक्त्वा पूर्तिमगमत् ॥

सायणभाष्यसमेतमिदं कलकत्तानगरे सत्यव्रतसामश्र-मिना, मंगलूरु नगरे बरुनल् अनेन रोमन् लिप्या, तिरुप्पति केन्द्रीयविद्यापीठे च मुद्रापितम् ।

अत्र ब्राह्मणे दृष्टार्थसाधनानि कर्माणिनैकविधानि विधीयन्ते । ऋग्विधानमितिग्रन्थे ऋग्वेदमन्त्राणां दृष्टार्थतया-प्रयोगश्शौनकाचार्येणप्रतिपादितः । तस्य स्मृतिरूपत्वात् तन्मूलभूताश्रुतिरेतद्ब्राह्मणमित्यपि वक्तुं शक्यते ।

ग्रन्थावसाने च भारताधिष्ठानदेवताया उत्तरत्रहिमालये दक्षिणतः कन्याकुमार्यां च नित्यसन्निहिताया भारतमातेतिप्रथमानायाः पराशक्त्या उपासनं तेनापुनर्भव लक्षणमोक्षप्राप्तिश्च-श्रूयते । "यः कामयेत न पुनः प्रत्याजायेयमिति,.... कन्यां-शिखण्डिनीं पाशहस्तां युवतिं कुमारिणीमित्यादिना । अतः षड्विंशे सामविधानेच प्रतिपाद्यमानमर्थं परिज्ञायानुतिष्ठासूनां सौकर्यायकिंचिद्विस्तरतो निरूपितम् ॥

## आर्षेय ब्राह्मणम्

चतुर्थमिदंब्राह्मणं प्रकृति साम्नां प्रत्येकं ऋषीन् ज्ञापयति । साम्नां ऋषिश्छन्दो देवता परिज्ञान पूर्वे प्रयोग एव फलप्रदो भवति । अन्यथा विपरीतफलत्वं च श्रूयते । "ऋषीणां नामधेयगोत्रोपधारणं स्वर्ग्यं यशस्यं धन्यं पुण्यं पुत्र्यं पशव्यं ब्रह्मवर्चस्यं स्मार्तमायुष्यं" इत्युक्त्वा अथापि ब्राह्मणं भवति "योहवा अविदितार्षेयश्छन्दोदैवत, ब्राह्मणेन, मन्त्रेण, याजयति वाऽध्यापयति वा स्थाणुंवर्छतिगर्तं वा पद्यते प्रवामीयते

पापीयान्भवति" इत्यादिना । साम्नां छन्दोदेवते नियते । ऋषिरेव भिद्यते । येनर्षिणा यत्सामदृष्टं, तस्य साम्नः स ऋषिः स्यादग्नऋषिश्छन्दो देवतापरिज्ञानात्, स्वर्गादिपुण्यलोकावाप्तिः, यशः प्राप्तिः, धनपुत्रपशुप्राप्तिः, ब्रह्मवर्चसाख्य तेजोविशेषः, स्मृत्युक्तं पूर्णमायुः इत्यादि भवति । ऋषिश्छन्दो देवता परिज्ञानाभावेन याजने, अध्यापने वा कृते, स्थावरजन्मप्राप्तिः नरकानुभवः, अल्पायुष्ट्वं, पापीयस्त्वं च भवति, इत्या युक्तम् । अतः अवश्यज्ञेयत्वात्, छन्दो देवता परिचयस्य स्वरूपतएवावगन्तुं शक्यत्वात्, ऋषीणां ज्ञापनमनेन क्रियत इति आर्षेयमित्यस्य संज्ञा । अत्राध्यायत्रयं विद्यते । प्रथमेऽध्याये अष्टाविंशतिः खण्डाः, द्वितीये पंचविंशतिः, तृतीये एकोनत्रिंशत्, आहत्य द्व्यशीतिः खण्डाः सन्ति । अतः प्रकृतिसाम्नां द्व्यशीति खण्डात्मकत्वात् अशीति द्वयमिति व्यवहारोऽत्रापि विद्यते ॥ इदानीं अध्ययन संप्रदायमनुसृत्य चतुरशीति खण्डाः सन्ति, तथापि आर्षेयब्राह्मणानुरोधेन अशीति द्वयमेव वर्तते । आर्षत्वात्तस्य तदेव ग्राह्यमिति भाति ।

### प्रथमे खण्डे

आर्षेयब्राह्मणाध्ययनस्य फलं, सामद्रष्टॄणां ऋषीणां समानस्थानो भवति, ब्रह्मणस्समानस्थानः जन्मान्तरपरिज्ञानं

साम्नां यातयामत्वपरिहारः पङ्क्तिपावनत्वं इत्यादि भवतीत्युक्त्वाऽस्याध्येतुः कंचन नियमं विधत्ते। अनन्तरं प्रणवस्य वेदत्रयसारतमस्य व्याहृतित्रयस्य हिंकारस्य गायत्रसाम्नश्च देवताऽर्षेयादिकमुक्त्वा गायत्रसाम्नः प्रस्तावादिभक्तीः स्वराक्षरनिरूपणं तासामित्यादि निर्दिशति ।

द्वितीयखण्डप्रभृति आसमाप्तेः क्रमेण एकैकस्य साम्नः ऋषिः, क्वचित् विकल्पइति प्रतिपाद्य समाप्यते ॥ इदं च समाष्यं तिरूप्पतिकेन्द्रीयविद्यापीठेमुद्रापितम् ॥

## देवताध्याय ब्राह्मणम्

अस्य प्रकृति साम्नां देवता निर्देशकत्वात् देवताध्याय इति संज्ञा । यद्यपि सामाधारभूतायाः ऋचः अर्थनिरूपणे देवतापरिज्ञानं भवति, न तदर्थं पृथगारंभः कार्यं इति शंका उदेति । तथापि अर्थबोधं विना सामस्वरूपनिरूपणेनैव देवता परिज्ञानं यथा भवति तथाऽत्रनिरूप्यते । किंच ऋगर्थनिरूपणे प्रति साम भिन्नैव देवता स्फुरेत् । इदंतु ब्राह्मणं सर्वेषां साम्नां दशभिरेव देवताभिः देवतापरिज्ञानं, तदपेक्षयात्रिभिरेव देवतागणैः, तदनन्तरं एकयैव देवतया सर्वेषां साम्नां देवता परिज्ञानं यथाभवति तथा लाघवेन बुद्ध्यारूढतां गमयति देवताः । इदं खण्डचतुष्टयात्मकं सायणभाष्यसहितं विद्यते । सत्यव्रत

सामश्रमिभिः पूर्वं मुद्रापितम् । दशवर्षेभ्यः पूर्वमस्माभिः टिप्पण्यासमेतं, मुद्रापितम् । द्वित्रवर्षेभ्यः पूर्वं तिरुप्पति केन्द्रीयविद्यापीठे मुद्रापितम् ॥

॥ प्रथमेखण्डे ॥

"अग्निरिन्द्रः प्रजापति स्सोमो वरुणस्त्वष्टाङ्गिरसः पूषा सरस्वतीन्द्राग्नी" इति दश देवता अभिधाय "इडानिधनानि पदनिधनानीकारणिधनानीत्याग्नेयानि' इति एतादृशनिधन वत्वेनाग्नि देवताकत्वं, निधनान्तरत्वेन इन्द्रादि देवताकत्वमिति, निधनज्ञानेन देवताज्ञानं संभवतीति ज्ञाप्यते । अनन्तरं "वसूनां स्वाराणि रुद्राणां निधनवन्ति आदित्यानामैडानि" इत्यादिना सर्वेषामपि साम्नां त्रिदैवत्यत्वमभिधायान्ते सर्वाणिब्राह्माणि इति अत्यन्त लघुभूतं सर्वेषां ब्राह्मत्वं विधत्ते । सर्वेषामपि साम्नां ब्रह्मण आविर्भूतत्वात् । अनन्तरं उपनिषदिति गोपनीयत्वेनाभिधाय "ऋग्वैमाता सामपिता" इति ऋक्सामयोर्मातापितृत्वं व्यपदिश्यते । तज्ज्ञानस्य फलं च श्रूयते ।

॥ द्वितीयेखण्डे ॥

'अथातश्छन्दसां वर्णाः, इत्यादिना गायत्र्यादीनां छन्दसां वर्णा उच्यन्ते । अनन्तरं 'अग्नेर्गायत्र्यभवत्' इत्यादिना

जगतीपर्यन्तानां, अतिच्छन्दसां विच्छन्दसां च, देवता अभिधीयन्ते।

॥ तृतीये ॥

"अथातोनिर्वचनं" इत्यादिना गायत्र्यादीनां निर्वचनं 'गायत्री गायतेः स्तुति कर्मणः, 'उष्णिक्, उत्स्नानात्, इत्यभिधाय क्रियते। अनन्तरं गायत्रं साम सस्वरं पठ्यते, साम्नः ऋष्यादि ज्ञानस्य फलविशेषोऽभिधीयते।

॥ चतुर्थे ॥

'अथ सावित्र्यङ्गानि व्याख्यास्याम' इत्यारभ्य सावित्री देव्याः शिरः ब्रह्मा, ललाटं द्यौः, चन्द्रादित्यौ चक्षुषी, मुख मग्निः, इत्यादिना सर्वदेतात्मकत्वमुक्त्वा एतज्ज्ञानस्य गायत्री मन्त्रप्रयोगे अक्षरस्वरादिभ्रंष दोषनिवर्तकत्वमभिधाय पूर्यते। एवं गायत्र्याः विराट्रूपस्य परिज्ञानं द्विजानां सर्वेषामपि आवश्यकम्। अतः इदं ब्राह्मणं न केवलं सामगानां, अपितु सर्वेषामुपकारकं भवति।

॥ छान्दोग्योपनिषत् ॥

छान्दोग्यं दशप्रपाठकात्मकं। तत्रादिमौ द्वौ मन्त्र ब्राह्मणाभिधेयौ। प्रथमेप्रपाठके विवाहमन्त्राः पुंसवन सीमन्त

जातकर्मनामकरणचौलोपनयनमन्त्राः, समावर्तन मन्त्राः, काम्य कर्मोपयुक्तामन्त्राः, पठ्यन्ते । द्वितीये, सर्पबलिमन्त्राः, आग्रयणमन्त्राः, पशुप्रयोगमन्त्राः, अष्टकाऽन्वष्टकामन्त्राः, काम्य-प्रयोग मधुपर्कमन्त्राः पठ्यन्ते । इदं सायणगुणविष्णुभाष्य द्वयोपेतं कलकत्ता संस्कृतकलाशालायां मुद्रापितम् ।

॥ अनन्तरमुपनिषद्भागः ॥

॥ प्रथमेऽध्याये ॥

"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यारभ्य उद्गीथा-वयवमोंकारं प्रतीकत्वेनावलम्ब्य उपासनं विधत्ते प्राणादित्यादि-दृष्ट्या । शरीरस्थकर्मज्ञानेन्द्रियाणामध्ये प्राणस्य श्रैष्ठ्योप-पादनम् । सूर्यमण्डलस्थस्वर्णमयपुरुषस्योपासनम् । शिलक-दाल्भ्य जैवलिसंवादमुखेन यज्ञकारिणामृत्विजां मन्त्रार्थ परि-ज्ञानं, उपास्यदेवता परिज्ञानं चावश्यकमिति ज्ञापयति । तथासति विशेष फललाभइत्यपि ज्ञापयति । अन्नलाभाय कुक्कुररूपैर्देवैः सामगानम्, स्तोभानां देवताः, इत्यादयः प्रति-पाद्यन्ते ।

॥ द्वितीयेऽध्याये ॥

पूर्वं सामावयवोपासनमुक्तम् । अत्र विशिष्टे साम्नि उपा-सनं विधीयते । तच्च साम द्विविधम्, पांचभक्तिकं, साप्तभक्ति

कमिति। सामानि नैकविधानि। रथन्तरं, वामदेव्यं बृहत्, वैरूपं, वैराजं, शाक्वरं, रैवतं, यज्ञायज्ञीयं राजनं, इत्यादीनि। तत्र वृष्टयब्दृष्टया, पशुप्राणादित्यादि दृष्टया च उपासनम्। ततः गायत्रादिसामसु उपासनम्। अनन्तरं धर्मस्कन्धास्त्रय इत्यभिधाय आश्रमधर्मानुक्त्वा "ब्रह्मसंस्थोऽमृतत्वमेतीति" सन्यस्य ब्रह्मज्ञानैकनिष्ठो भूयादिति मोक्षैकसाधनस्य ब्रह्मज्ञानस्योत्कर्षोऽभिहितः। ततः स्वतन्त्रोंकारोपासनं वस्वादिदेवताप्रार्थना, प्रातस्सवनादिषु सामहोमोत्थानमन्त्राः, विधीयन्ते।

॥ तृतीये ॥

अतीतेऽध्याये, यज्ञभूमिं वस्वादिभ्यः लब्ध्वा यज्ञानुष्ठानमुक्तम्। इदानीं यज्ञानुष्ठानस्य फलभूतमादित्यं मधुदृष्ट्या उपासीतेति विधीयते। आदित्यो देवानां मोदनहेतुत्वात् मधुवत् वर्तते। तादृशमधुनः अवलम्बनस्थानंद्युलोकः। अन्तरिक्षलोकः मध्वपूपस्थानीयः। मरीचयःपुत्रा इत्यादिना ऋचः मधुकृतः ऋग्वेदपुष्पात् रोहितरूपंमधु संपाद्य, वस्वादीनां उपजीवनं प्रायच्छत्। एवं यजुः, साम, अथर्वांगिरसः, रुद्रादीनां उपजीवनं प्रायच्छन् इति प्रतिपाद्यते। अत्र ऋग्वेदादिविहित कर्मणः फलभूतस्य आदित्यस्य वस्वादिदेवताभिः उपजीव्यत्वमुक्तम्। कल्पविरमे आदित्यः विदेहकैवल्यं प्राप्नोति ततः नोदेति नास्तमेति।

एतादृशमधुविज्ञानं ब्रह्मा प्रजापतये, स मनवे, स प्रजाभ्यः, प्रोवाच। एवं परंपरागतां विद्यां ज्येष्ठपुत्राय, प्रियतमाय-शिष्यायवा, ब्रूयात्। नान्यस्मै धनपूर्णां पृथिवीमपि दद्यात्, इति विद्यां प्रशंसति। गायत्र्यां ब्रह्मोपासनं, हृदयस्थपंचसुषिषु ब्रह्मोपासनं, परितः प्राणाद्युपासनमुक्तम् द्वारपालदृष्ट्या। अनन्तरं शाण्डिल्यविद्या। पुत्रदीर्घायुष्ट्वप्रदमुपासनम्। स्वस्य दीर्घायुष्ट्वसिद्ध्यर्थं पुरुषस्य यज्ञत्वदृष्ट्योपासनम्। एवमुपासने सषोडश शतवर्षजीवनं फलं। ततः आंगिरसः देवकीपुत्रायोक्तमक्षयादि फलकमुपासनम्। ततः मनो ब्रह्मेति, आदित्यो ब्रह्मेति, इत्यादिना उपासनमुक्त्वा, तस्य फलमुक्तम्।

॥ चतुर्थे ॥

जानश्रुतिः राजा, स्वदेशे सर्वत्रान्नसत्रं निर्माप्य, सर्वदा अन्नदानम् कारयामास। तेनतृप्ता देवाः राज्ञे ब्रह्मोपदेश चिकीर्षया हंसरूपेणात्मानं दर्शयामासुः। ततः राजा संवर्गविद्यां रैक्वान्महर्षेः अवाप्तवान्। ततः सत्यकामोजाबालः उपनयनाय गौतममभिजगाम। सः, किं गोत्रस्त्वमिति पप्रच्छ। नाहं जाने, मन्माताजबाला, इत्युक्तवान्। तस्य यथार्थवचनेन प्रीतः तमुपनीतवान्। ततः शिष्यं, गौतमः चतुश्शतागाः दत्वा एता अनुसर, यदासहस्रं गावोजाताः तदा निवर्तस्वेति, प्रेषयामास। अरण्यं

गत्वा गुरुभक्त्या गोरक्षणं कृतवन्तं सत्यकामं ब्रह्मोपदिदि गुर्देवा गुरुभक्त्या तोषिताः ऋषभाग्निहंसमद्गुरूपेणाविर्भूताः। अनन्तरं अचार्यमुपेत्यविद्यां पूर्णामकरोत्सत्यकामः। सत्यकामे, उपकोसलोनाम कश्चिदृषिरागत्य, गुरुकुलमध्युवास। द्वादश-वर्षाण्यासन्। गुरुशुश्रूषया परितुष्टाअग्नयः, अक्षिविद्याख्यां ब्रह्मविद्यामुपादिशन् गुरोः प्रवाससमये। प्रवासादागतो गुरुः शिष्यस्य तेजोविशेषं दृष्ट्वा विद्यापूर्तिमकरोत्। ततः यज्ञस्य वायुत्वेनरूपणं कृत्वा उभयोस्साम्यमुपपाद्य ब्रह्मर्त्विजः मौन-मावश्यकमिति विदधाति।

अनन्तरं ऋगादिमन्त्रभ्रेषप्रायश्चित्तार्थं व्याहृतिहोमं विधा-स्यन्, व्याहृतीनामुत्पत्तिमभिधाय, तद्धोमे कृते, यज्ञच्छिद्रसंधानं भवतीतिप्रतिपाद्यान्ते एतादृशविषयपरिज्ञातारं ब्रह्मत्वेन वृणुयात्, अनेवंविदं न वृणुयात् इति ब्रह्मणः यज्ञीययावदंश परिज्ञानमावश्यकमिति ज्ञापयति॥

॥ पंचमे ॥

प्राणस्य ज्येष्ठत्वेन श्रेष्ठत्वेनचोपासनं, ज्यैष्ठ्य श्रैष्ठ्यफलाय भवतीति प्रतिज्ञाय, प्राणस्य ज्येष्ठत्वं श्रेष्ठत्वं च निरूपयति। शरीर-स्थानीन्द्रियाणि अहमेवशरीरं धारयामीति परस्परं कलहं कृतवन्ति। अनन्तरं देहधारणं कस्येति अन्वयव्यतिरेकाभ्यां

ज्ञातव्यं, अन्वयापेक्षया व्यतिरेकस्यैव कारणत्वनिर्णायकत्वं, अतोऽस्माकं मध्ये यस्य शरीरादपगमे, देहं पतेत् स एव धारक इति निर्णेतव्यमिति व्यवस्थाप्य, एकैकमपागमत्। तदापि न शरीरमपतत्। ततः प्राणः उत्क्रान्तुं प्रववृते। तदा इन्द्रियाणां अवस्थानाशक्तया त्वमेवधारकः श्रेष्ठश्च, अस्माकं यद्यत् विरुद्धं वर्त्तते तत्सर्वं तुभ्यं दास्यामः इति प्राणं प्रार्थयामासुः। एवं प्राणस्य श्रैष्ठ्यंनिरूपितम्। अनन्तरं महत्वं प्रेप्सतः प्रयोगं विधाय रात्रौस्वप्नेस्त्रीदर्शने कार्यसिद्धिं जानीयादिति ज्ञापयति। श्वेतकेतुरिति कश्चिद्द्विप्रवटुः पांचालराजमागतवान्। राजा तं पित्राऽनुशिष्टः किमिति पप्रच्छ। अनुशिष्टोऽस्मीत्यंगीचकार-कुमारः। ततः राजा पंचप्रश्नानप्राक्षीत्। अस्माल्लोकात् प्रयन्तः जनाः कुत्र गच्छन्ति। तस्मादागमनसमये केनमार्गेणागच्छन्ति। देवयानपितृयानयोः व्यावर्तनं किं? प्रतिदिनं परश्शतं प्रयद्भिः जनैः, कथं स्वर्गोनसंपूर्यते, पंचभ्यामाहुतौ हुता आपः पुरुषरूपेण कथं परिणमन्ति इति किं जानासि? इति। पंचानामपि प्रश्नानां न कंचनप्रतिवक्तुं प्रगल्भोऽभूत्। ततः पितृनिकटमागत्य स्वपराभवमवोचत्। पिता अहमपि नवेद्मि, अतः नोपदिष्टंतुभ्यमित्युक्त्वा पुत्रेण सहाऽगत्य राजानं उपदेष्टुम-प्रार्थयत्। राजा नैतावन्तं कालं ब्राह्मणानाजगामैषाविद्या, अत

एव क्षत्रियाणां प्रजापरिपालनसामर्थ्यं भवति। भवता पृष्टत्वात् उपदिशामि, इतः परं विप्रा अपि ज्ञास्यन्ति इत्युक्त्वोपदिष्टवान्। तत्र केवल कर्मणा, उपासनसहित कर्मणाच केन मार्गेण गमनं, केन प्रत्यागमनं, वर्षधारयाऽऽगत्य तिलमाषव्रीह्यादि रूपेण प्रादुर्भूय, तेषां पेषणखण्डनादिसमये व्यथामनुभूय, पुरुषकुक्षिं प्रविश्य सुकृतवशात् स्त्रीगर्भं प्राप्य, तत्रासह्यवेदनामनुभूय, शूलवातेन निस्सारित इमं लोकं कथंप्राप्नोति, इत्यादिकंस्पष्टतया विवेचयति श्रुतिः परवैराग्य सिद्ध्ये। एषा पंचाग्निविद्या। एतस्या स्सम्यक्वेदने महापातकान्यपि नश्यन्तीति फलमुक्तम्। ततः प्राचीनशालादयः ऋषयः अश्वपतिं नृपमागत्य वैश्वानरविद्यामुपदिशेति प्रार्थितवन्तः। राजा, तेषां विज्ञानं परिज्ञाय वैश्वानरस्य विराड्रूपस्य एकैकं भागं ज्ञातवन्तोभवन्तः एकैकभागोपासने विपरीतं फलं स्यात्, संपूर्णतयोपासनं कुरुध्वमिति विद्यामुपदिदेश। एतादृशोपासकमुपजीव्यैव प्राणिनोजीवन्तीति तन्महिमाच प्रथितः अन्नस्याभ्यवहारस्य पुरस्तात्, परस्ताच्चाचमनं विधत्ते। प्राणाहुतिभिः तृप्ता अध्यात्मंप्राणादयः, अधिदैवं आदित्यादयश्च, प्रजापश्वन्न ब्रह्मवर्चसादिभिस्तर्पयन्त्येनं इत्यादिकंच प्रतिपादयति।

॥ षष्ठेऽध्याये ॥

श्वेतकेतुररुणपौत्र आरुणिपुत्रः आस। तं पिता त्वमिदानीं द्वादशवयस्कः अनुपनीतोद्वादवर्षः अस्मत्कुले नैतावत्पर्यन्तं

ब्राह्मणब्रुवोऽवर्तत, अनुतिष्ठ ब्रह्मचर्यमित्यनुशशास । सपदि प्रस्थितो गुरुकुलं गत्वा द्वादशवर्षाणि विद्यामधीत्यागतः चतुर्विंशतिवयस्कः । विद्यामदेनाप्रणतस्वभावं आगतं तं "स्तब्धोऽसि उत तमादेशमप्राक्ष्यः येना श्रुतं श्रुतं भवति अविज्ञातं विज्ञातमित्यादिनाऽपृच्छत्पिता । पुत्रः कथमिदं संघटते एकेन ज्ञातेनान्यत् ज्ञातं भवतीति सन्दिहान आस । एतादृशं पुत्रं संशयापाकरणायाहारुणिः । केनचित् कुलालगृहे प्रातः बृहन् मृत्पिण्डोदृष्टः, सायंकाले घटशरावादय आतपेन शोषणाय बहिः प्रसारिताः आसन्, तान् दृष्ट्वा स्मरति, योमृत्पिण्डोमयादृष्टः स एवेदानीं घटादिरूपेणवर्तत इति । तदा मृत्पिण्डादन्यत्वेन नगृह्यन्तेघटादयः । अपितु स एवेति गृह्यन्ते । ततः कारणेनज्ञातेन सर्वं कार्यं ज्ञातं भवतीत्यनुभवोऽपि जायते । एवं एकेनसुवर्णपिण्डेन, अयः पिण्डेनवा ज्ञातेन, कटककुण्डलादयः, अयःपात्रविशेषाश्च ज्ञाताभवन्ति । तथैव जगत्कारणपरिज्ञानेन बहुधाभिन्नं जगदिदं परिज्ञातं भवेत् । जगत्कारणवस्तुनः उपदेशैकगम्यत्वात् आदेश इति नाम, उत तमादेशं उपादिशदिति पृष्टम्मयेति विवृतवान् । श्रुत्वा चैतत्, पुनः गुरुकुलवासक्लेशभयेन नैतज्ज्ञातवानाचार्यः, यदिज्ञायेततदा उपदिशेत्, इतिप्रत्युवाच । अनन्तरं पितैवोपदिदेश "सदेवसोम्येदमग्रआसीत्" इत्यादिना ॥

परिदृश्यमानं जगदुत्पत्तेः पूर्वं कारणरूप सदात्मनाऽऽसीत्, नन्यत्किंचनाऽऽस। असदेवासीदितिकेचन मन्यन्ते, तत्कथं संगच्छेत। तादृशं सद्रूपं ब्रह्म स्वमायावशेन बहुरूपेणभवानी त्यैच्छत्। ततः तेजोऽसृजत, ततः आपः, ततः पृथिवीं। तत्त्रयमेकीकृत्य स्थूलप्रपंचं सृष्टवान्। अतएव एकैकस्मिन् वस्तुनि रोहितं, शुक्लं, कृष्णमिति, रूपत्रयंदृश्यते, इति अग्निज्वालायां रूपत्रयं दर्शयामास। ततः कठिनरूपाऽहारस्य स्थूलभागः मलरूपेणबहिर्गच्छति, मध्यभागोमांसरूपेणपरिणमते, सारभागोमनोभवति। द्रवरूपाऽहारस्य स्थूलः मूत्रं, मध्यभागोरक्तं, सारभागः प्राणाः। आज्यतैलादेः स्थूलादि भागाः अस्थिमज्जा वाग्रूपेण परिणमन्ते इत्युक्त्वा, मथ्यमानस्य दध्नः सारतमभागो नवनीतमिव, भुज्यमानान्नादेस्सारतमोभागो मन आदि भवति, तादृशं मनः षोडशकलमित्युक्त्वा निरूपयामास। श्वेतकेतो, पञ्चदशाहानि माभुङ्क्ष्व इत्युक्त्वा,षोडशेऽहनि त्वयाऽधीते यत्किंचित्स्फुरति वा इति पृष्टवान् न किञ्चनस्फुरतीत्युक्तं तेन। तदा जाज्वल्यमानस्याग्नेश्शमनानन्तरं कश्चित्कणः यदि विद्यते तदा नकिंचदपि दहति, तद्वत् मनसि कलैकावशिष्यते। अतः न स्फुरति, यथा कणे तृणादिभिर्वर्धमाने सर्वं दहति, तथा पूर्णकलेमनसि सर्वं स्फुरेत् इति निदर्शयति। पञ्चदशाहानि

भुङ्क्ष्वेत्युक्त्वा पृष्टवान्। सर्वमधीतमस्फुरत्। एवम्मनसः-षोडशकलत्वमन्नसारत्वं चोपपाद्य, स्वपितिपदनिर्वचनेनात्मानुभवंदर्शयति। जाग्रत्स्वप्नावस्थानन्तरंकाचनावस्थासुषुप्तिरिति। तदा पुरुषं स्वपितीत्याचक्षतेजनाः। स्वपितीत्यस्य स्वं - सत्स्वरूपं परमात्मानंअपिति, गच्छति इति निर्वचनम्। यथा पक्षिणः अहनि तत्र तत्र परिभ्रम्य रात्रौ नीडमायान्ति तद्वत् जीवः जाग्रत्स्वप्नकाले स्थूल सूक्ष्मशरीराभिमानीसन् दुःखान्यनुभूय सुषुप्तिकाले स्वीयं स्थानं प्राप्नोति, अतः स्वपितीत्युच्यते जनैः। तत्काले, न किंचिदपिस्फुरति, आनन्दानुभव एकोविद्यते। तदेव रूपं जगत्कारणं, तदेव त्वं असि इति ब्रह्मात्मैक्यमुपादिशत्। ततश्शिष्येण सुषुप्तौ सर्वेषां परमात्मगमने एवं रूपः अहमत्रागत इति कथं न जानन्तिजीवाः इति पृष्ठ अचार्य आह।

भ्रमराः पुष्पेभ्यः मधु आहृत्यमध्वपूपे स्थापयन्ति तदा एतादृशपुष्पीयमिदं मधु इति नविवेकोविद्यते, तद्वत् जीवानामेकत्र समावेशेविवेको नजायते। सुषुप्त्यनन्तरं शरीराभिमानेसति अहम्मनुष्यः, पशुः, पक्षीत्यादिबोधोजायते। सुषुप्तिकाले यत्र गताजीवाः तदेव ब्रह्म त्वमित्युपदिष्टवान्। ततः सुषुप्तिकाले माभूदनुभवः तत आगमनानन्तरं जाग्रत्काले एतावन्तं कालं सतासंगतोऽहमिदानीमत्रागतः इति कथं नज्ञायते ? इति

शंकायामेवमाह । गंगादयः सर्वानद्यः सूर्यरश्मिनाऽकृष्यमाणा-स्सामुद्रा आप एव । ता नद्यः अहं समुद्रादायातेति यथा नजानन्ति तद्वत्सत आगतोऽहमिति नजानन्ति जीवाः । यत आगता-स्तदेव, त्वमिति ।

ततः एतादृशस्य जीवस्य नकदापिनाश इति दृष्टान्तेन निरूपयति । कस्यचित् वृक्षस्य शाखाछेदने शाखैव शुष्यति नवृक्षः, तद्वत् देहादिनाशे नित्योजीवो जीवत्येव । एतादृशात् इन्द्रियागोचरात् ब्रह्मणः अत्यन्तसूक्ष्मात्कथं? स्थूलप्रपंचस्योत्पत्ति-रिति शंकामुद्भाव्य परिहरति । श्वेतकेतो ! वटबीजमानयेत्युक्त आनीतवान्, तत् भिन्धि इत्युक्तः अभिन्दत् । किं पश्यसि इति पृष्टःनकिञ्चनेति प्रत्यूचे । वटबीजपेषणे किं स्यात् । एता दृशात् अत्यन्तसूक्ष्मात् वटबीजा वयवात् महान् न्यग्रोधवृक्षो जायते तद्वत् अप्रमेयादपि सतः स्थूलसूक्ष्मरूपं जगदुत्पद्यते तदेव, त्वमसि । एतादृशकारणस्य सत्वे कथं प्रत्यक्षादिना नोपलब्धिः ? इतिपृष्टवन्तं श्वेतकेतुमाहपिताह्युपलब्धिप्रकारम् । अस्मिन्नुदपात्रे लवणंक्षिप, अनन्तरं पश्य, दृश्यतेवा लवणं पात्रे, इत्युक्तवान् । न दृश्यत इत्याह । तदुदकं पिबेत्युक्तः, पपौ, ज्ञायते वा लवणं? सम्यक् ज्ञायते । प्रथमं चक्षुषा दृष्टं, उदक-क्षेपानन्तरं नदृष्टं, अथापि रसनेन्द्रियेण ज्ञातं । अतः केनचि-

दिन्द्रियेण न दृश्यते, केनचि दृश्यते, अतः नास्तीति नवक्त-व्यम्। तद्वत् प्रत्यक्षानुमानाभ्यामदृष्टत्वेऽपि आगमेन दृश्यत इति श्रद्धत्स्व इत्युपदिष्टवान्।

कथमागमेन दृश्यत इति पृष्टवते प्रोवाच कश्चनपुरुषं नेत्रे पिधायारण्यं नीत्वा विससर्ज चोरः।

दोषो ग्रामः

सः अन्धवत् मदीयंग्रामं कुत्र वर्तते, पन्थानं नजाने-ऽहमिति चक्रन्दारण्ये। तंदृष्ट्वा कश्चिन दयालुः बन्धंविमोच्य अनेनमार्गेण याहि तत्र महान् वृक्षोवर्तते ततः दक्षिणतोगच्छ तटाकोवर्तते ततः प्राच्यां वर्तते भवद्ग्रामः इति बोधयामास। अनन्तरं तदुक्तं मनसिकृत्वा तत्र तत्र व्यावृत्य स्वग्राममागतः। तथा संसारारण्ये पतितोजीवः मोक्षमार्गमन्विष्यन् तत्र तत्र भ्रमति। कोटिजन्मकृत सुकृतपरिपाकेन साक्षात्कृततत्वः कश्च-नाचार्यः ब्रह्मतत्वमुपदिशति। उपदिष्टोऽयं तदुक्तमवधार्य स्वी-यानुभवेनापि दृढीकृत्य समाधिमास्थाय ब्रह्मैक्यन्मवाप्नोति। तदेव मोक्षस्वरूपम्।

अनन्तरं मोक्षमार्गगमनप्रकारोऽभिधीयते। व्याधिग्रस्तं चरमदशापन्नं बान्धवास्समीपमेत्य मांजानीहि इति पृच्छन्ति। तदा यदि वाक्, मनसि, नसंपद्यते तदा जानामीति वदति, यदि संपद्यतेतदा नवदति। तदानीं वाक् मनसि संपद्यते मनः प्राणे-

प्राणस्तेजसि तेजः परस्यां देवतायां लीयते। तादृशलय एवमोक्षः इत्यादिदेश। श्वेतकेतुरेतच्छ्रुत्वा वाङ्मनसीत्यादिरूपेण सत्संपत्तिर्विद्वदविद्वत्साधारणः। तदा सर्वेषामेव मोक्षप्राप्तिस्स्यात् विद्यामनपेक्ष्य। ततः कथं विद्वान्मुच्यते नाविद्वानिति लोकवेदप्रसिद्धिः, इति पृष्टवन्तं पुत्रमाहारुणिः। राजपुरुषः कंचनपुरुषमानीय राजसमीपं प्रापयति स्तेनोऽयमिति। राजा किं त्वमचोरय इति पृच्छति, यदि शुद्धःपुरुषः नाहं चोर इति वदति, तद्धस्ते तप्तलोहं निदधाति, तथापि नदहति, सत्यवादित्वात्। राजाच अयमचोर इति विससर्ज। यदि तत्वतश्चोरो नाहमचोरयमित्यनृतमभिधत्ते तदा हस्तेनिहितं तप्तपिण्डं दहति, राजाचानृतवादित्वात् दण्डयति, दाहप्रयुक्तवेदनां कारागृहदुःखं चानुभवति। अत्रानृतवदने सत्यवदनेच महान् दुःखानुभवः सुखानुभवश्च दृश्यते। तथा, विदुषः सत्याभिसन्धस्य प्रपंचमिथ्यात्वदर्शिनः अपुनरावृत्तिरूपमोक्षलाभः मिथ्यादर्शिनः पुनस्संसार दुःखानुभव इति विशेषो युज्यत एवेति। एवं दुर्ज्ञेयवस्तुज्ञानदार्ढ्याय नैकविधदृष्टान्तोपपादनेन प्रतिपर्यायं त्वं तदसीति ब्रह्मात्मैक्यमुपादिशदाचार्यः। शिष्यश्श्वेतकेतुस्सम्यक् प्रबुद्धवान्।

सप्तमेऽध्याये

नारदस्सर्वज्ञकल्पोऽपि शोक मोहावनुभवन् तदपनिनीषया सनत्कुमारमुपससाद "अधीहिभगव इति"। शिष्यस्य विज्ञानं परिपाकंचावबुध्यैवोपदेष्टव्यं तत्वमिति पप्रच्छ किं वेत्थ तद्ब्रूहीति गुरुः। नारदः ऋगादिवेदचतुष्टयंसांगमितिहासपुराणानि स्मृतयः निधिज्ञानं विषहरमन्त्रः राज्यपरिपालननीतिः अन्यच्चैतादृशं एतत्सर्वं वेद्मि आत्मवित् शोकंतरतीति भवादृशेभ्योऽश्रौषम्, शोकं मोहं चानुभवामि तयोस्तारणं भवतैव कर्तव्यमिति प्रत्यब्रवीत् ॥

वेदशास्त्रेतिहासपुराणागमकलादिकं सर्वं जानतोऽपि आत्मज्ञानाभावे सर्वमकिंचित्करमात्मज्ञानं च गुरूपदेशैकगम्यं तदर्थं यथावत् गुरुरुपसर्तव्यः इत्यादिकमत्राख्यायिकयाऽवगम्यते। तदाहभगवान् "तद्विद्धि प्रणिपातेन परिप्रश्नेनसेवया" इति ॥

अनन्तरं सनत्कुमारः त्वदधीतं सर्वं शब्द एव, नार्थः तथापि नामब्रह्मेत्युपास्वेत्युक्तवान्। तच्छ्रुत्वा नारदः शब्दात् श्रेष्ठं वस्तु विद्यतेवेतिपृष्टवान्। वागिन्द्रियेणैव शब्द्यते अतः वाक् शब्दाद्भूयसीत्युक्तम्। वाचोभूयः किं अस्तीत्युक्ते मन इति, ततः संकल्पः, ततः ध्यानं इत्यादि परंपरया प्राण एव सर्वतोभूयान् अराइव रथनाभौ प्राणे सर्वं प्रतिष्ठितं प्राणवित सर्ववित्

अतः स एव अतिवादी अतीतंवस्तुवेचिकिल इत्यादिप्रशशंस। नातःपरमपृच्छन्नारदः तदेव ब्रह्मेतिमत्वा। अपृच्छतेऽपि नारदाय "योग्यश्शिष्यो नप्रतारणीय इति मत्वा तत्वोपदिदिक्षया "एषतुवा अतिवदति यस्सत्येनातिवदति इत्याह सनत्कुमारः" एतच्छ्रुत्वा सत्यं विजिज्ञासितव्यमिति पप्रच्छ।

सत्यस्यविज्ञानं कारणं, तस्य मननं, तस्य श्रद्धा, ततः निष्ठा बलीयसी, श्रुतिः, सुखं, भूमा, भूम्नः परं नकिंचिदस्ति भूमैव सुखं भूमात्वेव ज्ञातव्य इत्याद्युपदिश्य भूमसुखं प्राप्तः नकिंचित्पश्यति शृणोति विज्ञानाति स्वात्मान्याभावात्। स एव उपरिष्टात् स्थितं सर्वं, सएवाधस्तात् स्थितं सर्वं, सर्वतः स्थितं स एव, तस्मादेवसर्वमाविर्भवति, स एव सर्वः इत्यादिना सार्वात्म्यमुपदिश्य तादृशमोक्षप्राप्तौ आहारशुद्धिः कारणं इत्युक्त्वा, नारदाय तमसः पारं दर्शयति भगवान् सनत्कुमारः तं स्कन्द इत्याचक्षते इत्युपसंहरति। अस्य भूमविद्येति संज्ञा। "भूमा संप्रसादादध्युपदेशात्" इति शारीरकमीमांसायां भूमा परमात्मेति निर्णीतम्॥

## अष्टमेऽध्याये

"अथयदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासि

तव्यम्' इति, अस्यार्थः इदं शरीरं ब्रह्मपुरं, ब्रह्मण उपलब्धि-स्थानत्वात् । अस्मिन् शरीरे हृदयेऽन्तस्सुषिरं वर्तते । हृदयपुण्डरीकाख्ये तस्मिन् यदन्तः तदेवज्ञातव्यं । अयमेव दहराकाशः । भूताकाशः याव त्परिमाणः दृश्यते अयमपि तावत्परिमाणः अत्रैव भूमिः स्वर्ग, अग्निः वायुः, सूर्यः, चन्द्रः, विद्युत्, नक्षत्राणि, इत्यादि सर्वमत्र विद्यते, शरीरदोषेण न तद्दुष्यति, जरामृत्यू अशनापिपासे नास्य स्तः, शोकमोहौच न स्तः, एतदुपासनस्य फलं पितृलोकावाप्तिः, मातृलोकावाप्तिः, संकल्पमात्रेण सर्वं पुरतो दृश्येत इत्यादिना विद्यां प्रशस्य उपासकस्य मार्गोप देशः क्रियते। शरीरेएकोत्तरशतं प्रधान नाडयः वर्तन्ते तासां मध्ये सुषुम्नेति-काचननाडी वर्तते तयोर्ध्वं गच्छन् अपुनर्भवलक्षणंमोक्षंप्राप्नोति । अन्यनाड्या उत्क्रमणे पुनर्भवमापद्यत इत्याद्युक्तम् । अत्र मोक्षप्राप्तिः क्रममुक्तिरूपाऽवगन्तव्या गत्युपदेशात् । इयमेव दहरविद्येत्युच्यते। दहरउत्तरेभ्यः, इत्यादि सूत्रैः दहराकाशत्वेन निर्दिष्टः परमात्मेति शारीरकमीमांसायां सिद्धान्तितम् ॥

अनन्तरं प्रजापतिविद्या। कदाचिन्द्रह्मा अपहतपाप्मत्व सत्यकामत्व सत्यसंकल्पत्वादि विशिष्टात्मैव ज्ञातव्यः । तस्मिन् ज्ञाते सर्वाल्लोकानाप्नोतिसर्वान् कामान् इति कथयामास । एत-च्छ्रुत्वा असुरराड्विरोचनः देवराडिन्द्रश्च परस्परं संवादमकुर्वन्तौ

तादृशात्मविविदिषया प्रजापतिमुपजग्मतुः । द्वात्रिंशतंवर्षाणि ब्रह्म-
चर्यादिनियमेनोषित्वाभवदुपन्यस्तं ब्रह्मोपदिशन्त्वित्यभ्यर्थयामा-
सतुः । अक्षिणिपुरुषः दृश्यतेखलु स एव मयोपदिष्टआत्मा अमृता
भयस्वरूप इत्युपदिदेश । अनन्तरं उदके आदर्शेच, दृश्यते यत्
तदेववा इतिपृष्टे तदेवेति प्रत्यब्रवीत् । ततः उदपात्रे शरीरंपश्य,
यत् न दृश्यते तद्ब्रूहि इत्यादिष्टः तथाकृत्वा शिखादिनख
पर्यन्तं स्पष्टं दृश्यते अदृश्यंकिंचन नासीदित्युक्तवान् । भद्रा-
करणेन देहं शुद्धंकृत्वाऽभरणादिभिरलंकृत्यपश्येत्युक्तवान् । तथा
दृष्ट्वा सालंकारं शरीरंस्पष्टंदृश्यते इत्यब्रवीत् । तदेवोक्तम्मयेति
कथितवान् । इन्द्रविरोचनौ तच्छ्रुत्वाऽगमताम् । तदा प्रजापतिः
आत्मानं सम्यगविज्ञाय गच्छन् पराभवं प्राप्नोति इत्युक्तवान् ।
एतन्नज्ञातवन्तौ तौ । विरोचनः असुरलोकं गत्वा शरीरमेवात्मा
न तदन्योऽस्तीति प्रजापतिरवदत् । शरीरमेव पोषणीयं, मृतेऽपि
अलंकारादिना परिचरणीयं, इत्यादिशरीरात्मवादं प्रचारया-
माम । तदिदानीमपि मृतशरीरं अलंकृत्य निर्हरन्तिकेचन ।

देवराजस्तु अक्ष्याऽदर्शादिषु शरीरप्रतिबिंबमेवदृश्यते,
तस्य क्षणिकत्वात्, शरीरमेवात्मेत्यवदत्, कथंवा नित्यानन्दात्म-
कत्वमनित्यदुःखस्य शरीरस्य संभवेदिति मत्वा, पुनरागच्छत् ।
प्रजापतिः विरोचनेन साकमौत्सुक्येनगत्वा किमर्थं ? पुनरागत-

वान् इतिपप्रच्छ । भवत्प्रोक्तं अपहतपाप्मत्व विशोकत्वादिकं शरीरेकथंसंभवति इति शंकमानआगममित्याहेन्द्रः ।

पुनर्द्वात्रिंशद्वर्षाणि ब्रह्मचर्येण वसेत्याज्ञापयत्, तथैव-चकार । ततः स्वप्ने, बन्धुभिर्भूषणैश्च महीयमानः पुरुषः अमृता भयस्वरूपआत्माइत्युपदिदेश । तच्छ्रुत्वासन्तुष्टः प्रवव्राज । किंचिद्गत्वाऽऽलोचयत् । यद्यपि स्थूल शरीरदुःखानुभवः स्वप्ने-नास्ति तथापि भयं, दुःखं, इत्यादयोविद्यन्ते शरीरधर्माः कथमात्मास्यादितिसंदिहानः पुनरागतश्चान्प्रजापतिसमीपम् । निवेदयामासचस्वीयाशयस्थम् । पुनः द्वात्रिंशद्वर्षाणिनियम-मातिष्ठेत्युक्तस्तथैवास्थाय प्रपन्नं सुषुप्तौ भयदुःखादिकं नास्ति किल आनन्दानुभवोविद्यते स एवात्मेत्युक्तोजगाम । गत्वा-चाचिन्तयत् । सुषुप्तौ यद्यपि भयादिकं नास्ति तथापि, न किंचित्प्रतिभाति, अज्ञ इव, मूढ इवच स्थीयते, कथमात्मा तादृशः स्यात् इति संशयितः पुनरागतः । पंचवर्षमुवासेत्युक्तस्तथाचकार । एवं एकोत्तरशतंवर्षाणि ब्रह्मचर्येण नियममास्थितव्रते देवराजाय "मघवन् मर्त्यंवा इदं शरीरमात्तंमृत्युना" इत्यादिना नहवै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, शरीरत्रयरहिता-वस्थायामेव नित्यचिदात्मानन्दानुभवः। आत्मनः विषयसुखानु-भवाय चक्षुःश्रोत्रादिकं, तदेतत्सर्वं ज्ञानसाधनं ज्ञानस्वरूप

आत्मा, तत्स्वरूपं प्राप्तोयथेष्टलाभः सर्वमपि सुखमनुभवति। तदेव प्राप्तव्यमिति उपादिशत्। ब्रह्मोपदेशं प्राप्तोऽश्वइवरोमाणि पापानि- विधूय राहुमुक्तोडुराडिव, शुद्ध ब्रह्मस्वरूप आस्तेन्द्रः। एतदेवसर्वै- रभिलषणीयं जनिमद्भिः प्राप्यं मोक्षस्वरूपम्। एतत् ब्रह्मणस्स- काशात् अस्माकमागतम्। एतज्ज्ञात्वागुरुकुलादागत्य परिणीय- कन्यां, कुटुंबेस्थित्वा पंचयज्ञाद्यनुष्ठानाद्देवपित्रादीन् संतर्प्य, पुत्रपौत्रादिकमवाप्य, नियतेन्द्रियः स्वधर्मानुष्ठानमहिम्ना, मोक्षमाप्नोति इति, एवं गार्हस्थ्य प्रशंसया समाप्नोदुपनिषत्। अनेन गृहस्थाश्रमधर्मस्यावश्यकतां, तेन निश्रेयसप्राप्तिरपि भवतीति ज्ञापयति। एतदेवाह भगवान् भगवद्गीतायाम् "कर्मणैवहि संसिद्धि- मास्थिता जनकादयइति" अत्र 'इहचेदवेदीदथ सत्यमस्ति, इति अध्ययनाधिकारीसर्वोपि औपनिषदमात्मज्ञानमधिगन्तुमधि- क्रियते। सर्वोपनिषत्परिचयाभावेऽपि अन्ततो गत्वा स्वीयशाखो- पनिषन्मात्रमभ्यस्तव्यम्। अतः सामगाः इदं पुस्तकमवलो- कयन्तश्छान्दोग्य प्रतिपादितं ब्रह्मतत्वं बुध्वाकृतार्थाभवेयुरिति मनीषया किंचिदधिकंविवृतम्। भगवत्पादीयं भाष्यं सायणीयमु- भयमपि वर्ततेऽस्या उपनिषदः।

अस्मद्गुरुचरणैश्शास्त्ररत्नाकर पण्डितराजेत्यादिबिरुदभू- षितैः पोलकं, श्रीरामशास्त्रिपादैः छान्दोग्योपनिषत्प्रमेय संग्रहः संग्रथित आर्याभिः, तदत्र प्रदर्श्यते॥

1. भगवत्पाद पदाब्जे, ध्यायन्नवधानकुतुकिनां प्रीत्यै ।
छान्दोग्योपनिषद्गत, प्रमेयसंग्रहमिहाकलये ॥

2. रसतम मुख्यगुणकोद्गीथोपास्तिः प्राणरव्युपास्तिश्च ।
व्यानध्युद्गीथाक्षर विद्ये चाशीस्समृद्धिरपिपश्चात् ॥

3. अमृताभयगुण दृष्टी रविरश्मिप्राणभेदगुणदृष्टिः ।
आदित्याक्षिगदृष्टिस्सांगाऽथाकाशविद्याच ॥

4. प्राणादित्यान्नानामुपास्तयश्शौव उद्गीथः ।
स्तोभाक्षरदृष्टिरपि प्रथमाध्याये समाम्नाताः ॥

5. साम्निच साध्विति दृष्टिर्लोकेवृष्टौतथाऽप्स्वृतुषुपशुषु ।
प्राणेषुपांचभक्तिक सामोपासाथवाचिचादित्ये ॥

6. सप्तविधसाम दृष्टिर्मतिरथसप्तविध भक्तिनामार्णे ।
गायत्ररथन्तरवामदेव्यसाम्नां तथाबृहत्साम्नः ॥

7. वैरूपस्यच वैराज शक्करी रेवती साम्नाम् ।
यज्ञायज्ञीयस्य च राजन साम्नश्च सर्वसाम्नांच ॥

8. प्राणाग्नयोर्मिथुनेचादित्ये पर्जन्यकर्तुलोकेषु ।
पश्वंगदेवतासु च सर्वस्मिन् प्रोतताधियो व्रतगाः ॥

9. हिंकारादिषु पंचसुनिधनान्तेष्वत्र सामभागेषु ।
परिकल्प्य पञ्चधाखलुसमुपास्याः प्राणवह्निमिथुनाद्याः ॥

10. इहखलुमहामनस्ताऽग्न्यभिमुखनिष्ठीवनाचमनविरहः ।
तल्पगतस्त्र्यपरिहृतिस्तपतोऽथोवर्षतोऽप्यनिन्दकता ॥

11. ऋतुलोकपश्वनिन्दा मांसानशनं महीसुरानिंदा ।
सर्वमहमस्मि चेति ह्युपासनाचव्रतानि वैक्रमशः ॥

12. गानविशेषादीनां संपत्स्वातन्त्र्यगौक्तृतेर्दृष्टिः ।
यज्ञांगसामहोमक मन्त्रोत्थानानिचद्वितीयेस्युः ॥

13. विद्यामधुगायत्री ज्योतिश्शाण्डिल्यकोशपद्पूर्वाः ।
पुरुषेऽध्वरधीः परधीर्मनः खयोरपि रवौतृतीयेतु ॥

14. संवर्गषोडशकलोपकोसलोपास्तयस्तुर्ये ।
यज्ञक्षतनिर्हरण व्याहृतयश्चापि निर्दिष्टाः ॥

15. प्राक्प्रत्यग्दक्षो दग्दिक्कलपादः प्रकाशवान्नाम ।
ऋषभोक्तः प्रथमोऽग्नि प्रोक्तोऽथानन्तवान्नाम ॥

16. मह्यन्तरिक्षदिवइति कलाश्चतस्रोऽब्धिसंयुता अस्य ।
हंसोक्ते ज्योतिष्मत्पादेऽग्निरवींदुविद्युतश्चकलाः ॥

17. मद्गवाख्य प्राणोक्तेऽथायतनवदाख्यतुर्य पादेतु ।
प्राणश्चक्षुश्श्रोत्रं मनश्च षोडशकलंत्विति ब्रह्म ॥

18. विद्याज्येष्ठत्वादिम गुणवत्प्राणस्य पंचमेमन्थः ।
पंचाग्निदर्शनंत्वथ विहितं वैश्वानरात्मविज्ञानम् ॥

19. उद्दालकेनषष्ठे सद्विद्या श्वेतकेतवे प्रोक्ता ।
उपदिष्टस्सुरमुनये सनत्कुमारेण सप्तमेभूमा ॥

20. सत ईक्षणेन तेजोबन्नानां भौतिकस्यसृष्टिश्च ।
जीवात्मनाप्रवेशस्संज्ञा मूर्तिप्रक्लृप्तिरपिकथिता ॥

21. बाह्याध्यात्मिकभेदादुदाहृताचत्रिवृत्कृतिः पश्चात् ।
वाक्प्राणमानसानां तेजोबन्नात्मता स्फुटाभिहिता ॥

22. स्वपितीत्यशिशिषतीतिचपिपासतीति त्रिनामनिर्वचनात् ।
मरणक्रमतश्चसत स्तत्वं सम्यङ्निरूपितंषष्ठे ॥

23. दृष्टान्तामधुनद्योवृक्षोन्यग्रोधफलमथोलवणम् ।
गांधारः पुरुषश्चाप्युपतापीबद्धहस्तपुरुषोऽष्टौ ॥

24. नामचवागथचमनस्संकल्पश्चित्तमपि ततो ध्यानम् ।
विज्ञानंबलमन्नं चापस्तेजस्तथाकाशः ॥

25. स्मर आशाप्राणोऽथ ब्रह्मतया ध्येयमखिलमप्येतत् ।
उत्तरमुत्तरमेतद्भूयो भूमाथसर्वतो भूयान् ॥

26. सत्यवदनविज्ञानेमनन श्रद्धेऽथनिष्ठाच ।
कृतिसुखलाभौ क्रमशः पूर्वं कार्यं परं हेतुः ॥

27. दहरोपासनमन्त्ये नाडी भेदः प्रजापतेर्विद्या ।
दहरोपास्तौजप्यश्श्यामाच्छबलं प्रपद्य इतिमन्त्रः ॥

28. अथनामरूपनिर्वोढृत्वमुखं ब्रह्मणोलक्ष्म ।
प्रार्थनमन्त्रोवंशोऽपुनरावृत्यै च कर्तव्यम् ॥

29. छान्दोग्योपनिषद् इत्यष्टाध्याय्याः प्रमेयसंग्रहणम् ।
श्रीरामशास्त्रिकलितं भगवत्पादांघ्रिपंकजेन्यस्तम् ॥

॥ संहितोपनिषत् ॥

संहितोपनिषदाख्यं सप्तमं ब्राह्मणमधिकृत्यविचार्यते । पंचखण्डात्मकमिदंब्राह्मणम् । सायणद्विजराजभट्टाभ्यां व्याख्यातम् । संहिता, विछेदमन्तरा प्रयुज्यमाना, अथवा, उपनयनादारभ्याजीवनं अभ्यसनीया। साच ऋक्संहिता, सामसंहितेति द्विविधा। तस्या रहस्यविचारोऽत्र क्रियत इत्यतः संहितोपनिषदिति नामास्यग्रंथस्य ॥

॥ प्रथमेखण्डे ॥

आर्चिकगानसंहितयोर्दैवासुरार्षभेदेन त्रैविध्यम् । एकान्ततोमन्द्रस्वरेण कैश्चिदप्यश्रूयमाणतया गानं दैवं, परोक्षं स्वर्गसाधनम् । सर्वैरपि श्रूयमाणतया बहिरास्यायगानमासुरं प्रत्यक्षं, पश्चादिदृष्टमात्रफलकम् । गृहे ब्रह्मयज्ञादौपरोक्षतया बहिर्यागादौ प्रत्यक्षतयाचगानं परोक्षप्रत्यक्षमार्षं, ब्रह्मवर्चसफलम् । पारलौकिकफलोद्देशेनैव प्रयुज्यमानंदैवं, अन्नपानादि-

दृष्टार्थमेव प्रयुज्यमानमासुरम् इतिवा। पुनः त्रैविध्यं देवहूः, वाक्शवहूः अमित्रहूरिति भेदेन। पुनरपि शुद्धाऽदुस्पृष्टाऽनिर्भुजेति त्रैविध्यमुक्तम्। ततः वायव्यादि भेदेन संहिता उक्ताः।

॥ द्वितीयेखण्डे ॥

लोपातिहारादिलक्षणानि। स्तोभानां प्रवृत्तिः। कर्षणभेदाः। रथन्तरस्य भकारनिवेशप्रकारः। भकारसामलक्षणमुद्गातृयजमानयोर्ज्ञातव्यं। अज्ञानेदोषाः इत्यादयः।

॥ तृतीयेखण्डे ॥

यज्ञे प्रयुज्यमानानां साम्नामूहप्रकारः। उदूहलक्षणम्। आरण्यके उदूहः। लांगलकालबविशाटयायनिनां गान प्रकारः। विद्यादानपात्रम्। विद्यादाने षड्धर्माः निमित्तम्। तादृशपात्रालाभे विद्ययासहमर्तव्यं नापात्रेदातव्यम्। वेदप्रामावष्टानुपनिषदः, संपूर्णदर्श्यसंपूर्णदर्शिलक्षणम्, अन्येचशिष्यधर्माः निरूप्यन्ते।

॥ चतुर्थपंचमयोः ॥

गुरुदक्षिणाविधिः। तत्प्रसंगेन दानान्तराणामपि प्राशस्त्यम्। दानानाम्मध्ये गोपृथिवीविद्यादानानां श्रैष्ठ्यम्। अन्ते शिष्यधर्मान्तराण्युच्यन्ते ॥

भाष्यद्वय समेतमेतद्दशवर्षेभ्यः पूर्वं षष्ट्यब्दपूर्तिट्रस्ट द्वारा मुद्रापितम्मया। द्वित्रवर्षेभ्यः पूर्वं तिरुप्पति केन्द्रीय विद्यापीठे मुद्रापितम्। सामतन्त्रफुल्लसूत्रादि सामप्राति शाख्यानां इदम्मूलमिति ज्ञायते।

1. इदं प्रमाणमादृत्य पुराचार्यैर्विदां वरैः।
सामसंबन्धि शास्त्राणि सुकृतान्यर्थविस्तरात्॥

2. भगवन्नारदेनापि स्वरशास्त्रं सुविस्तरम्।
लोमशप्रमुखैश्चापि नानाशिक्षाःप्रकल्पिताः।

3. ऋक्तन्त्रं सामतन्त्रंच पुष्पं चापि सुविस्तरम्।
साम्नां पुनस्तथा मात्रा लक्षणं समुदीरितम्॥
इत्यादिनाद्विजराजभट्टेनग्रंथोपसंहारेऽभिधानात्।

॥ वंशब्राह्मणम्॥

अष्टमेऽस्मिन् ब्राह्मणे खण्डत्रयं विद्यते। तत्राध्येतृपरंपराऽभिधीयते। त्रैवर्णिकानां जन्मद्विविधम् एकं मातापितृभ्यां जातम् सर्वैरवगम्यते। अपरं गायत्र्याख्य मात्रा आचार्याख्यपित्राच संभवति विद्याख्यम्। शरीरदात्रपेक्षया विद्यादात्रोर्मातापित्रोर्महिमातिशयः प्रदृश्यतेस्मृतिषु। तादृशाचार्य परंपरा शर्वदत्तगार्ग्यप्रभृति ब्रह्म पर्यन्तं अयमस्मादधीतवान् इति प्रदर्श्यतेऽत्र। "सर्व-

दत्तोगार्ग्यः रुद्रभूतेर्द्राह्यायणे रुपजायत" इत्यादिना। अत्र उपाजायत, इति पदं अडभावेन प्रयुक्तम्। छान्दसत्वात्। अत्र जनेः, प्रयुक्तत्वात् विद्यातोऽपि जन्म, प्रतिपद्यत इति ज्ञायते। प्रथमतः ब्रह्मणे, अथ ब्राह्मणेभ्यः, ततः आचार्यर्षिदेववेदेभ्यः नमस्कृत्य ब्राह्मणमारभ्यते। अतः आचार्य भक्तिः, तान्प्रति-प्रह्वीभावः प्रत्यहमनुसंधानमित्यादिकं विद्यासंरक्षणाय श्रेयः प्रसयेचावश्यकमिति भाति। एत द्ब्राह्मणस्था ऋषयः उपाकर्मणि उदकांजलिभिस्तर्प्यन्तेऽद्यापि समैस्सामगैः। बृहदारण्यकेऽपि एवं वंश ब्राह्मणं विद्यते शुक्लयजुर्वेदे। इत्थं सायणभाष्य मनुसृत्याष्टब्राह्मणानामर्थः स्थाली पुलाकन्यायेनादर्शि कृत्स्नार्थ विविदिषोत्पत्तये। कृत्स्नार्थावगम एव तात्पर्य बोधो भवेत्॥

## ॥ वेदांगानि ॥

वेदस्य पुरुषत्वेनरूपणं वर्तते। अतः पुरुषस्य यथा चक्षुः श्रोत्रादीन्यंगानिव्यवहारोपकारकाणि वर्तन्ते तथा वेदस्यापि कल्पसूत्रादीनि प्रयोगोपकारकाणि सन्ति। यैर्विनावेदो न प्रकाशेत, तानि षडंगानि शिक्षादीनि।

1. शिक्षा घ्राणम्। घ्राणं यथा पुरुषस्य भोग्येषु वस्तुषु सुगंधपूतिगंधौविवेचयत् ग्राह्यतां त्याज्यतां च बोधयति, तथा

स्वरवर्णोच्चारणमेवं कर्तव्यमेवं नेति ज्ञापयति, सम्यगुच्चारणेनेष्टं-फलं, विपरीतोच्चारणेनानिष्टंफलमिति बोधयति शिक्षा।

2. व्याकरणं मुखम्—मुखमित्यनेन वागिन्द्रियं गृह्यते। यथा वागिन्द्रियंविना पुरुषः पशुरेव भवति। तद्वत् व्याकरणं वर्णोत्पत्तिस्थानानि शब्दरूपनिष्पत्तिः, सुप्तिङन्तपदानि, उदात्तादि स्वरभेदाः, इत्यादिकं व्यंजयत् प्रधानमंगं भवति, तद्विना वेदोऽपि नशोभेत।

3. छन्दः पादौ—पुरुषस्य पादः प्रतिष्ठा साधनं भवति। छन्दश्शास्त्रमपि गायत्र्यादीनां छन्दसां लक्षणं बोधयत् अन्यूनानतिरिक्ततया मन्त्राणां प्रतिष्ठासाधनं भवति।

4. निरुक्तं श्रोत्रम्—श्रवणं, पुरुषस्य प्राण्यन्तरापेक्षया श्रैष्ठ्यस्य साधनं, ज्ञानं विज्ञानं च। वैदिकं ज्ञानं लौकिकं विज्ञानं च गुरुमुखादुपदेशं विना नसिद्ध्यति। तत्र श्रवणं मुख्यंसाधनं भवति। अतएव श्रवणमननादिषु, श्रवणकीर्तनस्मरणादिषु च श्रवणस्य प्राधान्यात् प्राथम्यम्। श्रुतस्यैवार्थस्य-मननयोग्यत्वात् स्मरणादि योग्यत्वाच्च। तथा दुरधिगमार्थाविष्करणद्वारा निरुक्तं वेदस्य श्रैष्ठ्यबोधकं भवति। अर्थानधिगमे ध्वनितुल्यत्वेन निष्प्रयोजनत्वात्।

5. ज्योतिषं नयनम्—यथानयनं पदार्थावबोधनद्वारा पुरुषार्थसाधनं भवति, तथा वेदोक्तकर्मणामनुष्ठानार्हकालावबोधनेन कर्मजन्यफल प्रापकं ज्योतिषम् पुरुषार्थसाधनं भवति।

6. कल्पसूत्रं हस्तौ—लोके पदार्थाबहवस्सन्ति। तेषु कंचित् स्वोपभोगार्थं हस्तेनादाय स्वीयतां संपाद्य उपभुंक्ते जनः, तद्वत् वेदे विचित्रफलकानि कर्माणि नैकविधानि विधीयन्ते। तेषां इतिकर्तव्यताबोधं विनाऽनुष्ठानस्याशक्यत्वात् तज्जन्यफलभोगो न संभवति। अतः इतिकर्तव्यतां बोधयत्कल्पसूत्रमनुष्ठापनद्वाराफलोपभोगसाधनत्वं कल्पयतीति हस्तत्वकल्पनं कल्पस्यावकल्पते।

तथा चशौनकः—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुः निरुक्तं श्रोत्रमेव च॥
शिक्षाघ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात्सांगमधीत्यैव ब्रह्मलोके महीयते॥

पुस्तकमिदं नेपालीयाभिलेख कोशालयेदृष्टम् (चरणव्यूहे-द्वितीयकण्डिका) एवं षडंगेषूपकारकतयाविद्यमानेषु इदानीं कल्पसूत्रमधिकृत्य विचारयामः। छन्द आदिकमधिकृत्य विचारयिष्यते

## ॥ कल्पसूत्राणि ॥

## ॥ द्राह्यायणसूत्रम् ॥

एतावता मन्त्रभागो ब्राह्मणभागश्च विवृतः। कौथुमशाखाचैतावतासंपूर्णा। तथाचापस्तम्बः, "मन्त्रब्राह्मणयोर्वेद्नामधेयमिति" एतादृशमन्त्र ब्राह्मणाध्ययनस्यैव श्रोत्रियत्वप्रयोजकत्वम्। तथाच स्मरति, एकां शाखामधीत्य श्रोत्रिय इति। मन्त्राणां यज्ञेषु विनियोजकानि कल्पसूत्राणि नैकविधानि बोधायनादीनि। वेदपुरुषस्य षट्स्वंगेष्वन्यतममिदं कल्पसूत्रम्। कौथुमशाखायां कल्पसूत्राणि दशेत्युक्तम्। तत्रेदं द्राह्यायणीयं सूत्रं प्रथमस्थानमर्हति औद्गात्रधर्माणां समग्रतयोपदेशात् ताण्ड्यानुसारेणसर्वयागविधानाच्च। अतएव कौथुमशाखाध्यायिनः द्राह्यायणसूत्रिण इति व्यपदिश्यन्ते। द्राह्यायणमहर्षिणा कृतत्वाद्द्राह्यायणसूत्रमित्यभिधाऽस्य संगच्छते। अत्र एकत्रिंशत्पटलाः, प्रतिपटलं चत्वारःखण्डाश्च सन्ति। छन्दोगसूत्रप्रदीप इति व्याख्या काश्यपगोत्रेण धन्विना कृता वर्तते ॥

### ॥ प्रथमेपटले ॥

परिभाषा। सर्वक्रतूनां साधारणः उद्गातृधर्मः। ऋत्विग्लक्षणम् अनूचानत्वादि। देवयजनलक्षणम् त्रिशुक्रिय-

स्वादि । औतोमधुपर्कः । सुब्रह्मण्यकर्तव्यं, सुब्रह्मण्याह्वानप्रकारः नामसुब्रह्मण्याह्वानम् । विकृतौविशेषः, सत्रेषु नामग्रहणम् ।

॥ द्वितीयतृतीययोः ॥

प्रस्तोतुः कर्तव्यम् । परिसामगानम् । प्रवर्ग्यकाले आगमनमार्गः । साम्नां गानकालः । अग्निचयने गीयमानानि सामानि । दीक्षणीयादिषु गानम् । प्रवर्ग्योद्वासनकालेगानम् । [illegible]नम् । प्रवर्ग्यसामसु धेनुषामविचारः । सुत्यारम्भः । अनूबन्ध्या । पयस्या । उदवसानीया । उद्गातुः औदुम्बर्युच्छ्रयणम् । तत्रमार्गविकल्पः । यूपोच्छ्रयणाभिमन्त्रणं । विश्वरूपागानप्रकारः । ज्योतिर्गानं । युगपत्कर्मसु त्रयाणामन्वयः । वेद्याक्रमणं । हविर्धानप्रवेशः । स्तोत्रार्थर्ग्जपः । द्रोणकलशप्रोहणादि । ग्रावयोजनमित्यादि । सर्पणप्रकारः । प्रवृतहोमः । तत्र उद्गातुर्विशेषः । स्तोत्रार्थं उपवेशनप्रकारः । उपगातृवरणम् । उपगानं, तत्र विकल्पः । स्तोत्रधर्माः, बहिष्पवमानस्तोत्रम् । तत्र विशेषः । उत्तरयोस्सवनयोर्वेद्याक्रमणादि । बहिष्पवमानधर्माः ।

॥ चतुर्थे ॥

सवनत्रयेऽपि स्तोमयोगप्रकारः । यजमानवाचनानन्तरं, तृणच्छेदादि उद्गातृकर्तव्यम् । उद्गातुः न्यूनातिरेके परेणोद्गाविते, आक्षेपेचकृते होमः । अनुव्याहरणमिति तस्यनाम । अहीने

सत्रे च बहिष्पवमानम् । एतत्काले उद्गात्रादीनां भोजनम्, राज भक्षणानन्तरं भोजननिषेधात् । सवनीयवपाहोमान्ते धिष्ण्योपस्थानं । गौरिकिणां शाखिनामुपस्थानम्, याजमानब्रह्मत्वे तयोः रोगादिना अशक्तौ उद्गाता यदाकुर्यात् तदा उपस्थाने विशेषः । सदःप्रवेशः, सदस्यस्योपस्थान भक्षणादि । सवनमध्ये बहिर्गमनमार्गः ॥

॥ पंचमे ॥

प्रस्तोतुश्चमसग्रहणधारणे, सोमभक्षणप्रकारः । आवृत्तिस्तोत्रेषु तृणग्रहणस्तोमयोगादि रात्रिपर्यायेऽतिरिक्तसंधिस्तोत्रयोश्च । कुशालक्षणम् । तस्याविधानप्रकारः । प्रस्तोतुर्विधानम् । पर्यायविष्टावेषुमिथस्संधानम् । पर्यायशब्दार्थः । समाप्ते सवनेगमनमार्गः । उत्तरयोस्सवनयोर्धिष्ण्योपस्थानम् । सत्रेषूपस्थानम् । दक्षिणाप्रतिग्रहः । तत्रोहप्रकारः । अश्वरथप्रतिग्रहेविशेषः, अनादिष्टानां प्राजापत्येनप्रतिग्रहः । स्मार्तकर्मसु दक्षिणाप्रतिग्रहः तूष्णीम् ।

॥ षष्ठेपटले ॥

पृष्ठहोमः, तत्रपक्षभेदः । रथन्तरस्तोत्रधर्माः । रथन्तरस्यापृष्ठत्वे धर्माणांप्रवृत्तिः कथमित्यत्र पक्षभेदः । वामदेव्यं ब्रह्मसामधर्माः । आर्भवानन्तरं पुरोडाशपिण्डः । सौम्यचरुः, तस्यभक्षणम् । यज्ञायज्ञीयधर्माः । तस्य आनुष्टुभत्वसंपादनम् । अग्नि-

ष्टोमसामान्तरेऽपि धर्माः । कुशासंलोभनं सर्वैः । तन्तवेतियजमानवाचनम् । हारियोजनभक्षणादियज्ञपुच्छम्, अवभृथः तत्र सामगान प्रकारः अनन्तरकर्तव्यं च ।

॥ सप्तमेपटले ॥

उक्थ्ये, वक्तव्यविशेषाभावात् षोडशिग्रहावेक्षणम् । अत्यग्निष्टोमस्यानित्यताप्रतिपादनम् । कृष्णाश्वनिधानं, हिरण्यधारणमित्यादि षोडशिधर्माः । भक्षणं, द्वादशरात्रे विशेषः । वाजपेयभक्षणं संघौहिंकारः, इत्यादि । असोमयाजिनः आहिताग्नेः याजने परिभक्षप्रायश्चित्तम् । तस्यविधानम् । सत्रयागायदीक्षिष्यमाणानां संवादः, अस्माकं मध्ये अन्यतमस्यसाधुकृत्याऽस्माकं भवतु पापकृत्यातु मास्त्विति । मत्रिणाम्मध्ये यदिकश्चिन्म्रियते तदा कर्तव्यम् । गवामयनप्रारम्भः । दैवोदासौर्ध्वसद्मनयोरहीनसत्रयोर्व्यवस्था । अभिप्लवषडहेसाम्नांविधिः, मतभेदेनव्यवस्था ।

॥ अष्टमेपटले ॥

गवामयनविकल्पः । संवत्सरसाध्यस्य तस्य मध्यवर्तिषु अहस्सुसाम्नांविधिः ।

॥ नवमे ॥

पृष्ठ्यषडहे, रथवहनं दुन्दुभिघोषः, अरणिनिधानं, उद्घोषः, धेनुवाशनमित्यादयः पृष्ठधर्माः । पृष्ठस्तोत्रेवाग्व्यापारबा-

हुल्यात्, अनन्तरदिने बहु भाषणवर्जनं, सर्पिर्मधुभ्यामृत्विग्भोजनम् । भक्षणमन्त्रः । पृष्ठधर्माणां विश्वजिति, सर्वपृष्ठाप्तोर्यामेचातिदेशः । द्वादशरात्रस्यसप्तमेऽह्नि आर्भवः । अष्टमनवमयोस्साम्नां विधिः । दशमेऽह्नि केचनधर्माः । ज्यायसि कनीयसि च छन्दसि अक्षराणां व्यवस्था । ब्रह्मोद्यं, तस्यार्थः उद्गातृकर्तव्यम् ।

॥ दशमेपटले ॥

महाव्रते परिसाम्नांकालविधिः । 'ऋश्यास' इत्यस्य गानप्रकारः । परोक्षप्रत्यक्षयोः फलभेदः । राजनस्तोत्रम् । तत्र राजाह्वानं, राज्ञः कर्तव्यम् । स्तोत्रकाले देवयजनं परितः भटैः शरवेधनम् भूमिदुन्दुभिशब्दार्थः । उद्गाता भूमिदुन्दुभिं वदति । महाव्रतस्तवनम् । औदुम्बर्यासन्द्याऽऽनयनं तत्रारोहणमुद्गातुः ।

॥ एकादशे ॥

वाणोनाम शततन्त्रीको वीणाविशेषः । तस्य आनडुहेनचर्मणाऽऽच्छादनम्, दुन्दुभ्याहननं पत्नीनां वीणावादनम् । सदसोबहिरन्तश्च वीणाद्वयं वादयेयुः, एकांमुखेन अपरां दण्डेन । वीणाया अपघाटिलेति नाम । वीणावादनस्य फलम् । अभिगरापगरौवदतः । अभिगरापगरशब्दार्थः । पुंश्चली ब्रह्मचारिणौ निन्दतः परस्परम् । मिथुनभावः, मार्जालीयं परितः दास्यः परीयुः । राजनस्तोत्रं पंचविंशस्तोमः यज्ञपुच्छेविशेषः ।

॥ द्वादशादिचत्वारः पटला ब्रह्मत्वविधिपराः ॥

श्रौतेस्मार्ते च कर्मणि ब्रह्मा भवति । सचहोमस्थाना-द्दक्षिणतः उदङ्मुख आसीत । पाकयज्ञशब्दार्थः । तत्रदक्षिणा । तत्प्रतिग्रहप्रकारः । आधाने प्रवेशोपवेशने । तत्र गेयानि सामानि तत्प्रकारः । मथन समये गानं ब्रह्मणएव, नोद्गातुः । इष्ट्यादिषुसंचारः, अनुमन्त्रणम् । प्रायश्चित्तहोमः । प्राशित्र ग्रहणप्राशने, यजमानेन ब्रह्मत्वकरणे कर्तव्यविशेषः । सर्वेष्टीनां ब्रह्मत्वातिदेशः । आधानेऽध्वर्य्वादीनां दक्षिणा, प्राणभक्षः । चातुर्मास्येषुविशेषः । वरुणप्रघासे, साकमे-धेषुविशेषः । अपूपप्रदक्षिणेऽनुगमनम् । पतिकामाकुमारी यदिस्यात् तदा कर्तव्यम् । पशुबन्धेषुविशेषः । सौत्रामण्यां सान्त्वाहिन्वसामनि निधनगानप्रकारः । हविर्यज्ञसोमसंस्थानां परिगणनम् । सोमयागेषु ब्रह्मत्वम् । तानूनप्त्रमाज्यम्, सोमा-प्यायनम्, निह्नवनम्, एतत्त्रयं उद्गातारस्सर्वेऽपिकुर्युः । प्रवर्ग्ये अग्निचयने, प्रवर्ग्योद्वासने च, ब्रह्म कार्यम् । अग्नीषोमप्रणयने सुत्यायां च कर्तव्यम् । सर्पणं प्रस्तोतृवत् । रश्मिरसीत्यादि ताण्डयोक्तानां मन्त्राणां बहिष्पवमानादि अतिरिक्तस्तोत्रान्तेषु अनु-मन्त्रणेविनियोगः । वाजपेयेविशेषः दक्षिणा, भक्षणविधान-मित्यादि ॥

## ॥ षोडशे पटले ॥

सन्तनिसाम्नः, प्रकृतौ तृचरूपत्वात्, प्रयोगकाले उत्तरासुऋक्षु एकस्यामृचि तृचात्मकं गानं, आहोस्वित् तिसृष्वपि भागशः गानं, इतिविचार्य राद्धान्तः। विष्टुतीनां प्रकाराः बहवोविहिताः, तत्रग्राह्या विष्टुतयः काइति प्रदर्शनम्। चतुर्ऋच पंचर्चादि सूक्तेषु स्तोत्रांगतया ग्राह्याः का ऋचइति प्रतिपादनम्। स्तोमवशात् स्तोत्रीयाणां ह्रासे एकर्चकरणं विधीयते। सुषमिद्ध इति चतुर्ऋचेसूक्ते प्रवरानुसारेण व्यवस्था।

## ॥ सप्तदशाष्टादशयोः पटलयोः ॥

पर्यायेषु तृचभागात्रापपरिचराव्यवस्था। पर्यायास्समा विषमाश्च सन्ति, तेषां साम्यं कथमिति विचार्य निर्णयः। चतुष्टोमक्रतौ स्तोमविधानम्। स्तोमानां दुरवगाहत्वात् स्तोमविभागस्य फलम्। प्रकृतौ पवमानादिषु स्तोत्रेषु छन्दो दैवत निधनानि यादृशानि, तान्येव विकृतावपीत्युक्त्वा तस्यापवादं दर्शयति। प्रस्ताव भक्तिः। ओंकारेण उद्गीथोपादानं। साम्नां प्रतिहारभक्ति कथनम्।

## ॥ एकोनविंशेपटले ॥

वामदेव्यादीनां केषांचित् उत्तमपादे पंचमषष्ठाक्षरेप्रतिहारः। आकूपारादीनां षडक्षराः प्रतिहारः। एवमक्षरसंख्यातः

प्रतिहार भक्तिंज्ञापयति। 'अप्रतिहाराः द्विप्रतिहाराः, स्तोभसहिताः, तद्रहिता इति बहुभिः प्रकारैः प्रतिहारभक्तिं सुलभतयाबोधयति। प्रस्तावः पूर्वमुक्तः। प्रतिहारेज्ञाते उद्गीथोपद्रवौसुबोधौस्यातामित्यभिप्रायेण प्रतिहारः प्रदर्शितः।

॥ विंशे पटले ॥

सन्तनि, पार्थुरश्म, महानाम्नीनां प्रतिहारः। शुक्रिये, साम्नां स्तोभबाहुल्यात् तत्रविचारः। राजनस्य अध्ययने त्रिःकृत्वः, अभ्यस्तानां प्रयोगकाले पंचकृत्वाभ्यासविधिः। इलान्दसाम, भद्रश्रेयसोः, प्रतिहारः। अन्तर्निधनानि बहिर्निधनानि। प्रस्ताव प्रतिहारनिधनानि ऊहे यथायोनिगायेत्। सिमासु विशेषविचारः ऊहे अनुष्टुभिगीतत्वात्।

॥ एकविंशे पटले ॥

प्रकृतिगाने 'ऊपा' इति निधनंवर्तते, तस्यछन्ननिधनमिति संज्ञा। तच्च अर्धपूर्णाध्यर्धभेदेन त्रिविधम्। प्रयोगकाले तत्स्थाने पदान्तरं विधीयते, प्रायेण सुव इति, तर्हि ऊपानिधनस्यकुत्रोपयोगः इतिचेत्, ब्रह्मयज्ञादौ इति समाधिः।

गायत्रगानं ब्राह्मणमूलकम्। तस्यगानप्रकारः प्रस्तावादिभागाः। बहिष्पवमाने धूर्गानप्रकारः। काम्यानि निधनानि। आज्यस्तोत्रे विशेष इत्यादि गायत्रपटलः।

॥ द्वाविंशे पटले ॥

एकाहाहीनसत्राणां उदगयनपूर्वपक्षपुण्याहेषु प्रारम्भः अनादेशे । दक्षिणाशब्दः गवार्थकः । हिरण्यमित्यस्यसुवर्ण मित्यर्थः । दीक्षाकालः । उपसदः । उक्थ्यस्तोत्रविकल्पः । अतिरात्रे, तद्भिन्ने च उक्थ्यं । स्वतन्त्रस्य ज्योतिष्टोमस्या- ग्निष्टोमोक्थ्यातिरात्रात्मकसंस्थात्रयवत्वम् । अतिरात्रे सहस्रंदक्षिणा । अग्निष्टोमादौद्वादशशतंगावः दक्षिणा । विश्वजिदभिजितोः एकं फलं दर्शपूर्णमासवत् । अनुष्ठानं क्रमेणेति सूत्रकारः । युगपदिति- शाण्डिल्यः । तदा देवयजनं ऋत्विजश्चभिन्नाएव । तस्यानुष्ठान- प्रकारः । पृथक् सहस्रदक्षिणा । क्रमेणानुष्ठानेऽभिजितः सहस्रं दक्षिणा, विश्वजितः सहस्रं सर्वस्वं वा दक्षिणा । सर्वस्वदक्षिणा- कत्वे सर्वस्वदानानन्तरं नियमः । त्रिरात्रमरण्ये वासः, वन्या- हारः, त्रिरात्रं निषादसमीपेवासः । ब्राह्मणान्नं भुंजीत । सर्व- जित्क्रतुः, तस्यदीक्षा । साहस्राख्याः क्रतवः । ततः साद्यस्क्राष्ट- ट्क्रतवः, तेषांदीक्षादयस्सुत्यान्ताः प्रयोगाः, विशेषधर्माश्च, विधीयन्ते । शत्रुनाशार्थे श्येनः, तस्य धर्माः, स्तोत्रसामानि, दक्षिणा, इत्यादि प्रपंचितः ।

॥ त्रयोविंशेपटले ॥

व्रात्यस्तोमः, तस्य प्रायश्चित्तरूपत्वात् नैमित्तिकत्वम् । ज्योतिष्टोमस्तुनित्यः । अनयोस्सन्निपाते, प्रथमं किं कर्तव्यमिति

विचार्यज्योतिष्टोमं कृत्वा, व्रात्यस्तोम इति निर्णयः। व्रात्यस्तोमं कृत्वा त्रैविद्यवत्सर्वं कर्मानुतिष्ठेयुः, तद्गृहे भोजनादि कर्म-निषिद्धम्। अग्निष्टुत्क्रतवः "योऽपूतइवस्यात्सोग्निष्टुतायजेत" इति पूतत्वसंपादनकामः तत्राधिकारी ब्रह्मवर्चसकामश्च इत्यादि। बृहस्पतिसवः। ब्राह्मणाः, राजानश्च यं धर्मव्यवस्थापकत्वेन वृणुते सोऽधिकारी। इदं नैमित्तिकं, काम्यं तु ब्रह्मवर्चसकामस्य। तयोर्धर्माः। बुद्धिपूर्वं शरीरपरित्यागं कर्तुकामः सर्वस्वारं कुर्यात्। यागप्रकारः। तस्य संस्कारक्रमः। यदिजीवेत्तदा कर्त-व्यम्। एतच्च कलियुगे निषिद्धम्। चातुर्मास्य कालविधानम्।

॥ चतुर्विंशः पटलः ॥

उपहव्यः क्रतुः, तत्र देवतानामानि परोक्षं ब्रूयुः यथा "होतादेव" इत्यत्र होतायज्ञ इति वक्तव्यम्। सुषावसोमं इत्यत्र सुषावइन्दुं। इन्द्रमग्निमित्यत्र शक्रं वह्निमिति। क्वचिद-परोक्षमपि वर्तते। ततः ऋतपेयः। तत्र दीक्षायां पयोव्रतमि-त्यस्यस्थाने घृतव्रतम्। तच्च प्रतिलोमेनांगुलि पर्वणा घृतप्राशनं कर्तव्यमिति। सोमभक्षणेविशेषः। ततः दूणशस्य क्रतुः वैश्यस्तोमः। तीव्रसुत्। यः सोमंकृत्वा नष्टश्रीको भवति, ज्येष्ठेऽनिष्टवति कनिष्ठो यदि यजेत, कनिष्ठे इष्टवति ज्येष्ठः यदियजेत, यः सोमं वमति, तेषां तीव्रसुति क्रतौ अधिकारः।

ततः वाजपेयः। तत्र यं ब्राह्मणाः राजानश्च पुरस्कुर्वीरन् स-वाजपेयेन यजेत, इत्युक्तोऽधिकारी। तस्य दक्षिणा, दासी. निष्क रथ, हस्ति, यान, गवादीनां सप्तदश। वाजपेयः पंचविधः। तत्र स्तोत्रसामानि। दक्षिणा इत्यादीनि प्रतिपाद्यन्ते।

॥ पंचविंशः पटलः॥

राजसूयः। अस्याधिकारी राजा। दीक्षा। अभ्यारोहणीयः। तत्र अभिषेचनीयः। महर्त्विजां दक्षिणा द्वात्रिंशतं सहस्राणि। तदर्धं प्रस्तोत्रादीनां तदर्धं तदवराणां, तदर्धं तदवराणामिति क्रमः। अभिषेचनीयदशपेययोरेकैवदीक्षा, अतः अभिषेचनीयसमाप्तौ अवभृथे स्नानं नकुर्याद्यजमानः कृष्णविषाणमज्जनमात्रम्। अनन्तरं दशाहेऽतीते दशपेयः। एकस्मिन् चमसे दश ऋत्विजः भक्षयेयुः। अत्र सुब्रह्मण्यस्यापि भक्षणम्। बहिष्पवमानकाले उद्गात्रे सुवर्णमयींमालां द्वादशपद्ममालां च दद्यात्। अध्वर्यो स्सौवर्णकुण्डले। वासः पोतुः, इत्यादिदानम्। वत्सरादूर्ध्वं केशवपनीयः। राजसूय दक्षिणा। राज्ञामेकाहाः। उद्भिद्वलभिदौ। गोसवः, यं वैश्यं राजानः, विशश्च, पुरस्कुर्वन्ति स गोसवं कुर्वीत। अयुतंत्वस्य दक्षिणा। मरुत्स्तोमः। सखायः भ्रातरोवा त्रयः मिलित्वाऽधिकारिणः। अभिचारः, इषुः, सन्दंशः, वज्रः, अभिचारेकृते शान्त्यर्थं ज्योतिष्टोमः कार्यः।

## ॥ षड्विंशः पटलः ॥

अहीनक्रतवः। तेषांदीक्षा, उपसदः, सुत्या। अहीनशब्दोयोगरूढः द्विरात्रादिषु। अहर्गणसाध्यत्वस्य सत्वेऽपिसत्वात्। राजसूयादयोनाहीनाः। सोमबाहुल्येऽपि प्रत्येकमवभृथेन पूर्णत्वात्। अहीनेषु दक्षिणादानम्। आर्षेयानार्षेयविद्वल्लक्षणम् तयोर्दानम्। ज्योतिष्टोमातिरात्रस्य स्वतन्त्रत्वं, उतद्वादशरात्रां गत्वमिति विचार्य स्वतन्त्रत्वमिति सिद्धान्तः। रथन्तरस्य ओंकारवाक्च्छब्दयोः समुच्चित्य उद्गीथादौ प्रयोगः, नान्यतरेणान्यतरस्यबाधः। अप्तोर्यामविकल्पाः। गर्भगर्भिस्तोत्राणि। एकस्तोमाः क्रतवः यत्र बहिष्पवमानादयः सर्वे एकस्तोमा एव। शबलिहोमः। सहस्रशः पशुवृद्धिकाम एनं कुर्यात्। द्वादशरात्रं नियममास्थाय औपासनेऽग्नौ होमः, तस्य प्रयोगः। होमान्ते समीपस्थ वनं गच्छेत्। तत्र श्वगर्दभशब्दे श्रुतेऽसिद्धिः। अन्यस्मिन् शब्देसिद्धिः। कस्याप्यश्रवणे पुनः कार्यः। एवं वत्सरत्रयं कुर्यात्।

## ॥ सप्तविंशः पटलः ॥

अश्वमेधः। अत्र राजा सार्वभौमोऽधिकारी। दीक्षां कृत्वाऽश्वं विसृजेत्। भटा अनुधावेयुः। संवत्सरं रक्षित्वा प्रत्यागच्छेयुः। संवत्सरपर्यन्तं प्रतिदिनं तिस्र इष्टयः। मध्याह्ने

पारिप्लवं । आख्यान श्रवणम् । अश्वागमनानन्तरं दीक्षा उप-सदादयः । प्रथमेऽह्नि अश्वस्य वालमालभ्य बहिष्पवमानार्थं सर्पणं कर्तव्यम् । स्तोत्रधर्माः, राजपत्नीनां प्रोत्साहनं । ब्रह्मोद्यं, ब्रह्मापृच्छेदुद्गातारम् । कथं विष्णुः त्रिभिः पदैर्लोकमाक्रान्त-वानिति । तस्य महिमाएवं, "तस्य गात्रे जगत्सर्वमासीनमपि पश्यति" इति प्रतिवचनम् । एवं पृच्छामि त्वा परमं तं पृथिव्याः इत्यादि । प्राचींहोत्रे इति चतस्रः दिशोऽपि महर्त्विग्भ्यः दद्यात् । अथवा यावत्तृप्ति ऋत्विजां दानम् । अथाश्वमेध-विकल्पाः । तत्र बहिष्पवमानादीनां विधानं, गोविनतोऽश्वमेधः । अश्वमेधानन्तरं षट्पशुबन्धाः, चतुर्विंशतिरिष्टयः । अश्वत्रिरात्रा-दनन्तरं, वसिष्ठः पुत्रहतोऽपश्यदिति विहितं चतूरात्रम् । अन्येप्यहीनाः । अहीनयाजनं नकर्तव्यमिति पक्षमुद्भाव्य सयुक्तिकमंगीकृतम् ।

॥ अष्टाविंशः पटलः ॥

सत्रयागाः । तत्र दीक्षा, क्रय, प्रथमसुत्या, समाप्तिरित्येते चत्वारः पूर्वपक्षेस्युः । दीक्षाः उपसदश्चानादेशे द्वादशस्युः । यजमाना एव यत्र ऋत्विजः तत्सत्रमिति लक्षणम् । द्वादशाहस्य अहीनसत्रोभयरूपत्वम् । चतुर्थेऽहनि षोडशिसामविचारः, शक्करीविधानं, पुरीषपदगानं । दशमेऽहनि मानसस्तोत्रम् ।

मानसस्तोत्रं दशमाहस्यांगं आहोस्वित् द्वादशरात्रस्यांगमिति विचारः। यदि द्वादशरात्रांगं तदा द्विरात्रादिषु भवेत्। यदि दशमाहस्य तर्हि दशमाहोयुक्तेष्वेव भवेदिति फलम्। दशमाहांगमिति राद्धान्तः। छन्दोमानधिकृत्य विचारः। आंजनाभ्यंजनविधिः। स च एकोनपंचाशद्रात्रः। शतरात्राख्यः क्रतुः। गवामयन दीक्षा विकल्पः।

॥ एकोनत्रिंशः पटलः ॥

गवामयनम्। तत्र पंचसुमास्सु बार्हताः प्रगाथा इत्यस्य व्याख्या। चतुश्शतमैन्द्रा बार्हताः प्रगाथा दाशतयीषु इति वाक्यमनूद्य तस्यविवरणम्। सर्वेमहर्त्विजः महाव्रतेन स्तुवीरन्नित्यस्यार्थः। इलान्दसाम्नः 'अग्नेतव श्रवोवय' इत्यस्यामृचिगानप्रकारः। तत्र मतभेदाः।

॥ त्रिंशः पटलः ॥

छन्दोमदशाहयोः स्तोमक्लृप्तिः। तापश्चिते, दृतिवातवतोरयने च स्तोमक्लृप्तिः। दीक्षासुत्यादिः, कुण्डपायिनामयनम्। तत्र मासमग्निहोत्रं जुहोतीत्यत्र मासशब्दार्थः, पक्षभेदेन दर्शितः। तत्र पिण्डपितृयज्ञः अंगमनंगं वा इति विचारः। 'मासं मेधं' एतद्ब्राह्मणविवरणम्। यो होता

सोऽध्वर्युरित्यादिवाक्यार्थः। क्षुल्लकतापश्चित, महातापश्चितभेदेन तापश्चितोद्विधः। तस्य प्रयोगः। तापश्चितानन्तरं त्रीणिसंवत्सर-सत्राणि, द्वादशसंवत्सर, त्रिंशत्संवत्सर, शतसंवत्सरकालानुष्ठेयानि।

॥ एकत्रिंशः पटलः ॥

सरस्वतीनामनदी प्रत्यक्स्रोताः प्रवहति, तस्याः प्राग्भागापरभागौ प्रत्यक्षौ, मध्यभागो भूम्यामन्तर्हितः। तद्देशः विनशनमिति तद्दक्षिणेतीरे सारस्वतं सत्रं कुर्यात्। तस्य प्रयोगः। गोष्टोमप्रयोगः, आयुष्टोमप्रयोगश्च पक्षभेद प्रदर्शन-पुरस्सरंप्रदर्शितः।

सरस्वत्याः प्राग्भागे दृषद्वतीति काचन नदी प्रवहति, तत्रापोनप्त्रीयानाम इष्टिः कर्तव्या। यदा सर्वज्यानिं जीयतेऽथोत्थानमिति ब्राह्मणवाक्यस्यार्थः। एवं ताण्ड्यब्राह्मणवाक्यानि बहूनिविवृतानि। अनन्तरं दार्षद्व्रत तीरयोः व्रतानि, नियमाः सरस्वत्यास्तीरे, कुरुक्षेत्रे च, बहवोयागा विहिताः। सरस्वती दृषद्वत्योस्संभेदे आग्नेयमष्टाकपालं यजेत। सर्पसत्रम्। षण्ड-कुषण्डात्रभिगरापगरौ, अस्यार्थः। अभिगरोनाम प्रशंसिता। अप-गरोनिन्दकः। प्रजापतेस्सहस्रम्। विश्वसृजामयनम् सहस्रसंवत्स-रसाध्यम् ॥

1. निदान कल्पोपग्रन्थब्राह्मणानिपुनः पुनः ।
निरीक्ष्य धन्वी सूत्रस्य दीपमारोपयत्स्फुटम् ॥

2. छन्दोग सूत्रहृदयं यथा तत्वबुभुत्सुभिः ।
धन्विनाऽरोपितोदीपो हस्ते यत्नेन धार्यताम् ॥

एवंधन्विनामव्याख्याता ब्राह्मणकल्पनिदानोपग्रंथ ग्रन्थान् सम्यक्परिशील्य सूत्रस्य प्रकाशनाय दीपारोपवत् व्याख्यां कृतवान् । इदं सूत्रं दशकत्रय रूपेणापि व्यभजत्, पटलसमाप्तौ कुत्रचित् । इति छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते ।
॥ तृतीये दशके षष्ठः पटलो व्याकृतोऽधुना ॥

इत्यादि श्लोकोदृश्यते । दशसूत्राणामपीदमेव प्रधानमिति पूर्वमुक्तम् । अत एव कौथुमश्शाखिनस्सर्वेऽपि "द्राह्यायणसूत्रः" इत्यभिवादनकाले कथयन्ति । अस्यपंचदश पटलामुद्रिता इति श्रूयते, परंतु इदानीन्नोपलभ्यते कोशागारंविना । रुद्रस्कन्दव्याख्यापि विद्यत इति श्रूयते । परं नोपलभ्यते । इदंद्राह्यायणसूत्रमामूलाग्रमनुसरल्लाह्यायनसूत्रमिति ग्रन्थो वर्तते, मुद्रितं च पूर्णतया । तदेव प्रामाणिकत्वेनगृह्यत उत्तरदेशीयैः श्रौतविद्भिश्छन्दोगैः ॥

॥ अनुपदसूत्रम् ॥

अनुपदसूत्रं दशप्रपाठकात्मकम् एकैकस्मिन् प्रपाठके प्रायशः पंचदशखण्डाः सन्ति । ग्रंथोऽयंताण्डय ब्राह्मणमनुसृत्य यजुर्मन्त्रान् विनियोजयति ॥ "यजुषां कर्मसु लिंगतो विधानं अर्थग्रहणात् लिंगतस्तु संबन्धेन शब्दविशेषोद्रव्यवचनौदुंबरी-प्रथमेनेति" इत्यारभ्यान्ते विकृतिषु सुब्रह्मण्याह्वानप्रकारं निरूप्य गानविधिं दर्शयति । "प्राग्गौरशब्दादतश्च प्राक् सुत्या-देशात् प्रागन्त्याच्चैव पृथङ्नामसुवचनेवचनेवा विरमेत् । एष सुब्रह्मण्यायाः स्वरविरामयोर्नियमः । तस्या अर्यमादित्यः, इन्द्रोदेवता, संपाछन्दः सर्वेषां छन्दसां रूपं, यत्प्रथमद्वितीये चतुरक्षरे तेन गायत्री, यत्पंचमं सप्त, तेन ककुप्, यत्प्रथमं त्रिरुक्तं तेन जगती, यदन्त्यं पुनरभ्यासेन पंचदश, तेनाति-च्छन्दाः एवमेषां सर्वाणि रूपाणि सर्वाणि छन्दांसि सर्वा देवताः स य एतामेवं सर्वछन्दस्यां वेद सर्वांश्च लोका नाप्नोति सर्वांश्च कमान् अपहतपाप्मा विशोकश्च भवति सपत्नांश्च जयति सपत्नांश्च जयति इति" ग्रंथसंख्या १४९५ - विक्रमशक - १६३८-अधिकश्रावण पर्वणि नागरजातीय गंगाधरसुत गोपीनाथसुत पुरुषोत्तमेन प्राचीन नागरीलिप्या लिखितम् । वाराणसेयसंस्कृत-विश्वविद्यालये वर्तते । नातिस्फुटत्वादक्षराणां कृत्स्नशः बोद्धुं

नग्नक्ष्यते । अस्मद्देशेसंरक्ष्यतइति संतोष्टष्यम् । जर्मन् देशे मुद्रापितं वर्तत इति श्रूयते । इदानीं समे छन्दोगाः उपाकर्मणि वेदारम्भसमये द्राह्यायणसूत्रारंभात् परं अनुपदंहित्वा निदानसूत्रवाक्यं प्रयुञ्जते । अनुपदस्यानुपलंभात् । अधुनोपलभ्यमानत्वात् इतः परं तदपि संयोजयेयुरिति विश्वसिमि ।

॥ निदानसूत्रम् ॥

श्रौतसूत्राणि दशेत्युक्तम् । तत्रान्यतमंनिदानसूत्रं, एतत्पतञ्जलिमहर्षिणा प्रणीतम् । दशप्रपाठका, एकैकस्मिन् प्रपाठके त्रयोदशखण्डाश्च सन्त्यत्र । प्रथमे प्रपाठके सप्तभिः खण्डैः छन्दसां विवरणं क्रियते । छन्दश्चांगेष्वन्यतमं पादरूपं वेदपुरुषस्येत्युक्तम् । इदं च वैदिकान् मन्त्रानियत्तया परिच्छिनत्ति अक्षरपरिमाणैः "चतुर्विंशत्यक्षरागायत्री त्रिपदाऽष्टाक्षरपादा" इत्यादिना । पादबद्धामन्त्रा ऋच इत्युच्यन्ते । ऋचश्चर्ग्वेदे, सामवेदे च बहुलाः । यजुर्वेदेऽत्यन्तं विरलाः । अतः ऋग्वेदेपिंगलनागेन सामवेदे पतञ्जलिमहर्षिणा च छन्दसां लक्षणम् विशदीकृतम् । श्रौतेषुस्मार्तेषु च कर्मस्वधिकारिभिर्द्विजैश्छन्दसां स्वरूपं ज्ञातव्यम् । सन्ध्यावन्दनादिषु प्रयुज्यमानानां मन्त्राणां ऋषिश्छन्दोदेवता परिज्ञानाभावे दोषस्मरणात्परिज्ञाने

गुणश्रवणाच्च। "योहवा अविदितार्षेयश्छन्दोदैवत ब्राह्मणेन मन्त्रेण याजयतिवाऽध्यापयतिवा स्थाणुंवर्च्छतिगर्तं वा पद्यते प्रवामीयते पापीयान्भवति, अथ यो मन्त्रे मन्त्रेविद्यात्" इत्यादिना ॥ अर्षेय-ब्रा। इदानीमपि श्रौतेषु कर्मसु सामवेदिभिः, स्मार्तेषु कर्मसु ऋग्वेदिभिश्च ऋषिश्छन्दोदेवतोच्चारणपूर्वकमेव मन्त्राः प्रयुज्यन्ते। सन्ध्योपासने च बहुभिरापोहिष्ठाऽग्निश्चेत्यादौ ऋष्याद्युच्चारणं क्रियते। समे च द्विजाः सन्ध्योपासने गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्ति त्रिष्टुब्जगत्यश्छन्दांसि, निचृद्गायत्रीछन्दः, दैवीगायत्रीछन्दः, इति वदन्ति प्रतिदिनम्। अतोऽवगन्तव्य छन्दसां विवेचनम्। चतुर्विंशत्यक्षरगायत्री प्रभृति चतुरुत्तरशताक्षरसमुद्रछन्दःपर्यन्तमेकविंशतिश्छन्दांसि प्रधानतयाऽवान्तराछन्दांसि च बहूनि प्रतिपाद्यन्ते लक्षणकथनपुरस्सरमत्र ग्रन्थे।

तत्र गायत्री चतुर्विंशत्यक्षरा, त्रिपादा, अष्टाक्षरपादा च। क्वचित् पञ्चाक्षरपादाऽपि भवति। 'विश्वेषांहितः' इत्यत्र। क्वचिद्दशाक्षरा च। एवमुत्तरत्रापि द्वित्राक्षराणां ह्रासः वृद्धिश्चभवति क्लृप्ताक्षरात्। उष्णिक् अष्टाविंशत्यक्षरा। प्रथमतो द्विपदाऽष्टाक्षरपादा, ततो द्वादशाक्षरपादः। पुरतोद्वादशाक्षरपादा

चेत् सा पुर उष्णिक्। मध्यतोद्वादशाक्षराऽभितोऽष्टाक्षराचेत्सा-ककुप्। चतुष्पदापि सप्ताक्षरपादा उष्णिक् भवति। अनुष्टुप् चतुष्पदाऽष्टाक्षरपादा। मध्येऽष्टाक्षराऽभितोद्वादशाक्षराचेत् सा पिपीलिकामध्यानुष्टुप्। अष्टाक्षरपादस्य ज्योतिरितिसंज्ञा। स यदि पुरतः तदा पुरस्ताज्ज्योतिरनुष्टुप्। यदि मध्ये मध्ये-ज्योतिरनुष्टुप्। यद्युपरिष्टात् उपरिष्टाज्ज्योतिरनुष्टुबिति नाम। षट्त्रिंशदक्षरा बृहती, त्रिपदाऽष्टाक्षरपादा, उपोत्तमोद्वादशाक्षरः, एषा पथ्या बृहती। पुरस्ताद्वादशाक्षरा, पुरस्ताद्बृहती, द्वितीया द्वादशाक्षरा उरोबृहती। अन्तेचोपरिष्टाद्बृहती। त्रिपदा-द्वादशाक्षरपादा मतोबृहती। चतुष्पदा नवाक्षरपादाऽपि भवति। चत्वारिंशदक्षरा पङ्क्तिः। पञ्चपादाऽष्टाक्षरपादा। चतुष्पदापि भवति, द्वादशाक्षराऽष्टाक्षर द्वादशाक्षराष्टाक्षरेति, तां सिद्धाविष्टार-पङ्क्तिरित्याचक्षते। पुरतोद्वावष्टाक्षरौ ततो द्वौ द्वादशाक्षराविति साऽस्तारपङ्क्तिः। पुरतो द्वौद्वादशाक्षरौ ततो द्वावष्टाक्षराविति सा प्रस्तारपङ्क्तिः मध्ये द्वावष्टाक्षरावभितो द्वादशाक्षरौ सा संस्तारपङ्क्तिः। मध्ये द्वादशाक्षरौ द्वावभितोऽष्टाक्षरौ साविष्टार-पङ्क्तिः, अक्षरपङ्क्तिर्विंशत्यक्षराणि। चतुष्पदापञ्चाक्षरपादा। पञ्चविंशत्यक्षरापि भवति, पञ्चपदा पञ्चाक्षरपादा। तां पदपङ्क्ति-

रित्याचक्षते। चतुश्चत्वारिंशदक्षरात्रिष्टुप्। चतुष्पदैकादशाक्षर-पादा। त्रयःपादाद्वादशाक्षरा ह्यन्तेऽष्टाक्षराऽपि भवति। सा ज्योतिष्मती त्रिष्टुप्। पञ्चपदाऽपि भवति चत्वारोऽष्टाक्षराह्यन्ते द्वादशाक्षरः। अष्टाचत्वारिंशदक्षरा जगती। चतुष्पदा द्वादशा-दक्षरपादा। पञ्चपदापि भवति त्रयोऽष्टाक्षरपादाः द्वौ द्वादशा-क्षरौ। षट्पदापि भवति अष्टाक्षरपादाः। एवं सप्त छन्दांसि। द्विपदाऽष्टाक्षरपादाचेत् द्विपदा गायत्री। एवं द्विपदा त्रिष्टुप्। द्विपदाजगतीत्यपि बोध्यम्। दशाक्षराविराट्। एकपाद प्रभृति बहवो मन्त्रास्सन्ति। एतादृश सप्तछन्दसामुपरि सप्त-छन्दसां वर्गद्वयं विद्यते, तच्चेत्थम्।

द्विपञ्चाशदक्षराविधृतिः। षट्पञ्चाशदक्षरा शक्वरी। षष्ट्य-क्षरा अष्टिः। चतुष्षष्ट्यक्षराऽत्यष्टिः। अष्टषष्ट्यक्षरामंहना द्वासप्तत्यक्षरा सरित्। षट्सप्तत्यक्षरा संपा। अयमेकोवर्गः। अशीत्यक्षरा सिन्धुः। चतुरशीत्यक्षरा सलिलं। अष्टाशीत्य-क्षरा अंभः। द्विनवत्यक्षरा गगनम्। षण्णवत्यक्षरा अर्णवः। शताक्षरा आपः। चतुश्शताक्षरा समुद्रः। अयमेकोवर्गः। एवमेकविंशतिः छन्दांसिनिर्दिष्टानि। एषां कृतच्छन्द इति संज्ञा। कृत इति चतुरङ्कस्याक्षरस्य नाम। अत्र चत्वार अङ्काः सन्ति। गायत्र्यादिछन्दसामपि उपर्युपरि चत्वार्यक्षराणि

वर्धन्ते। अतः कृतत्वमेषाम्। द्वाविंशत्यक्षरप्रभृति द्विशताक्षरपर्यन्तं चतुरुत्तरतया त्रिवर्गास्सन्ति छन्दसाम्। तासान्नामधेयानीत्थम्। राट् सम्राट्, विराट्, स्वराट् स्ववशिनी, परमेष्ठा, अन्तस्था, इत्येको वर्गः।

वृत्तं, अमृतं, वृषा, जीवं, तृप्तं, रसं, शुक्रं, अयमपरः। अर्णः, अंशुः, अंभः, अम्बु, वारि, आपः, उदकम्। अथमुत्तमः। द्व्यक्षर प्रभृति चतुरुत्तराणि पंच छन्दांसि। तेषांनामानि हर्षिका, शर्षिका, सर्षिका, सर्वमात्रा, विराड्रूमा इति, एवं निर्दिष्टानां छन्दसां कृत्स्नाक्षरेभ्यः एकाक्षरन्यूनतायां निचृत् इति, एकाक्षराधिक्ये भुरिगिति च संज्ञा। अतएवास्माभिर्जप्यमानगायत्र्याः निचृद्गायत्रीति व्यवहारः। इतःपरं दैवासुरप्राजापत्यछन्दांसि निरूप्यन्ते। एकाक्षरा देवगायत्री, एकैकाक्षराधिक्ये उष्णिगादयः। सप्ताक्षरा देवजगती। एवमसुरगायत्री, पंचदशाक्षरा, एकैकाक्षरन्यूनतायां उष्णिगादयः। नवाक्षराऽसुरजगती। प्रजापति गायत्री अष्टाक्षरा। चतुरुत्तरेण उष्णिगादयः द्वात्रिंशदक्षरा जगती। देवासुरप्रजापतिछन्दसां मेलनेन आर्षं छन्दस्समजनि। यथा देवगायत्री एकाक्षरा। असुरगायत्री पंचदशाक्षरा। प्रजापतिगायत्री अष्टाक्षरा, आहत्य चतुर्विंशत्यक्षराऽर्षगायत्री। एषैव गायत्री प्रयोगार्हाभवति। एवमेव उष्णिगादयः आर्षाएव प्रयो-

गार्हा भवन्ति। संयुक्ताक्षराणां संज्ञा प्रश्लिष्टं, अभिनिहितं, क्षिप्रसंधिः, अभिद्रवं, इति। एषां विश्लेषप्रकारोऽभिहितः। एवं प्रतिपाद्य, फलवचनमभिहितम्।

"छन्दसां विचयं जानन्यश्शरीराद्विमुच्यते।
छन्दसामेति सालोक्यमनन्त्यां विन्दते श्रियमिति॥

एवंनिदानसूत्रे सप्तभिःखण्डैश्छन्दसां विवरणं कृतम्। अस्य छन्दोविचयः - विचितिः - इति वा संज्ञा॥

अनन्तरमष्टमखण्डात् त्रयोदशपर्यन्तं "अथातस्तोमान्व्याख्यास्याम" इत्यारभ्य, स्तोममधिकृत्य विचारः कृतः। स्तोमो नाम यज्ञेषु क्रियमाणानां बहिष्पवमानादीनां स्तोत्राणां संख्याविशेषः। स च त्रिवृत, पंचदश, सप्तदश, एकविंश, त्रिणव, त्रयस्त्रिंश, चतुर्विंश, चतुश्चत्वारिंशाष्टाचत्वारिंश, भेदेन नवविधः। एकैकस्तोमः त्रिधाविभक्तः। विभागस्य पर्यायइति संज्ञा। एकैकस्य पर्यायस्य त्रिधाविभागोऽस्ति। तस्य विष्टुतिरिति संज्ञा। एकैकस्यां विष्टुतौ तृचभागः, आवापस्थानं, परिचरा, इति विज्ञेयविशेषोविद्यते। कृतस्तोमः, त्रेतास्तोमः, द्वापरस्तोमः, कलिस्तोमइत्यपि भेदोऽस्ति। कुशा नाम स्तोमसंख्यापरिगणनाय काष्ठ विशेषः। सा पालाशी, औदुम्बरनिर्मितावा, अंगुष्ठपरिमाणा, तीक्ष्णाग्रा, कुशवत् अधोभागे समा प्रादेशमात्रीच स्यात्। तां

प्रस्तोता प्रस्तावांते उदगग्रां प्रागग्रां वा वैण्डुतेवसने निदध्यात्। निधानप्रकार अत्रोदितः। दीर्घसत्रेषुखादिरी। ततः सामानि निधन-भेदेन आग्नेयैन्द्रवैश्वदेव प्राजापत्यानीति प्रतिपाद्यन्ते। स्तोत्रेषु साम्नां एकरूपत्वे जामिता दोषः स्यात्, अतः विभिन्नतया विधीयन्ते।

## द्वितीयः प्रपाठकः

यज्ञेषु विनियुज्यमानानि सामानि ऊहगानस्थानि। प्रकृतौ विद्यमानानि रथंतरादीनि, उत्तरासु ऋक्षु प्रक्षिप्य गीयमानानि सामानि ऊहगानानि। तत्र आधारभूतानामृचां आधेयभूतानां रथन्तरादिसाम्नांचापौरुषेयत्वम्। उभयोस्संसर्गःपरं लक्षणानु सारेण पुरुषेणक्रियते। तथापि आधाराधेययोरपौरुषेयत्वेन ऊहग्रन्थः अपौरुषेय इति निदानकार मतम्। रथन्तरबृहदादीनां वसिष्ठादिना दृष्टत्वाद्यथा, वसिष्ठऋषिः, भरद्वाजऋषिः, इत्युच्यते तथा प्रक्षेपस्य पुरुषकर्तृकत्वादूहः पौरुषेय इति प्रथा। इति प्रति-पाद्य, एकर्चीकरणं, छन्नगानं, राथन्तरबार्हत भेदेन सर्वसाम्नां विभागः, ब्रह्मसामस्तुतिकाले यजमानस्य काममनुसंधाय-गानप्रकारः, अग्निहोत्र दर्शपूर्णमास विषयको विचार इत्यादि।

आहिताग्निः कृष्णपक्षेमृतश्चेत् दर्शपर्यन्तमग्निहोत्रमनु-ष्ठाय दर्शेष्टिं कृत्वा संस्कारः। संस्कारकाले यज्ञपात्राणां निधान

प्रकारः। एवं संस्कृतः यज्ञायुधी स्वर्गं गच्छति। वामदेव्य गानं शान्त्यर्थं। आहिताग्निसंस्कारः द्राह्यायणसूत्रेत्रयोविंशपटले तुरीयखण्डे सर्वस्वारकर्तौविशदीकृतः। बहिष्पवमान स्तोत्रे हिंकारः। धूर्गानम्। बृहद्रथन्तरयज्ञायज्ञीयादिषु प्रस्तावादि भक्तिविचारः। उक्थ्यषोडशि स्तोत्रयोः सामविधानम्। स्तोत्र-प्रकार इत्यादयः प्रतिपादिताः।

## तृतीयप्रपाठकः

प्रथममग्निष्टोमएव कर्तव्यः। देवेषु यथा ब्रह्मा परिबृढः तथा यज्ञेष्वग्निष्टोमः, तं परित्यज्यान्यानुष्ठाने ब्रह्मणः हिंसैव स्यात्। ताण्ड्येऽपि १६ अध्याये १ खण्डे एतदुक्तम्। ततः अग्निष्टोममतिरात्रं चाधिकृत्य विचारः। सन्धिस्तोत्रे सामविधा-नम्। छन्दोविषयेऋषीणां मतभेदः। सन्धिसामशब्दार्थः। अहीनक्रतुषु स्तोत्रविधानम्। सुब्रह्मण्याख्यगानम्, तस्यगाता सुब्रह्मण्यः। सत्रेषु सुब्रह्मण्याह्वानं, द्वादश रात्रे प्रत्यहं बहिष्पव-मानादीनि स्तोत्राणि। तत्र शाक्करसाम्नि, शाक्करः अशाक्करः, पुरुषः, वत्सः, धेनुः, ऊधः, एतेषां लक्षणम्, इदं च ताण्ड्ये त्रयोदशे, द्राह्यायणसूत्रेविंशे च, विशदतया विचारितम्। महाना-म्नीविचारेणावसितः।

### चतुर्थःप्रपाठकः

सर्वसाम्नां गायत्र त्रैष्टुभजागत भेदेन त्रैविध्यम्, महानाम्नीनां अभ्यास पुरीषपदानां भक्तिकथनम्। महानाम्न्यध्ययन-नियमः। त्रिवर्षावरं नियमेन महानाम्न्यध्ययनम्। नियमा एवं, सायं प्रातः स्नानं, कृष्णवस्त्रधारणं कृष्णधान्यभक्षणम्, दिवातिष्ठन् रात्रावासीनः, गुरावत्यन्तं विनयः, मेघेवर्षतिबहिर-निर्गमः। एवं नियमः, एकैकवर्षे एकैकंसामाध्येतव्यं, समाप्तौ सायंकाले वस्त्रेण चक्षुषी पिधायासीत। प्रातर्होमानन्तरं विमुच्य नेत्रवेष्टनम्।

जलं, अग्निं, वत्सं, आदित्यमेतान् समन्त्रमीक्षेत, एवं नियमेन स्थिते सति वर्षः स्मरणसमये भवति, यं यं कामयते तं तं प्राप्नोति। एतन्निदानोक्तं खादिरगृह्यवृत्तौ रुद्रस्कन्दा-चार्येण, गोभिलमहर्षिणा च तृतीयेपटले द्वितीयेखण्डे विस्तृत-तयाऽनूदितम्। एवंद्वादशवर्षाणि षड्वर्षाणि वा व्रतमनुतिष्ठत फलभूयस्त्वं भवति। ततोद्वादशरात्रे ब्रह्मराजन्यवैश्यानां बार्हद्गि-रपार्थुरश्मरायोवाजीयानि ब्रह्मसामानि अन्यच्च द्वादशरात्रमधि-कृत्यनिरूपणंकृतम्।

### पंचम षष्ठयोः

अभिप्लवषडहे बहिष्पवमानादीनिस्तोत्राणि, तत्रस्तोमवि धानम्। अभीवर्तस्य ब्रह्मसामत्वविचारः विशदीकृतः। प्रतिसवनं

छन्दांसि ततो विषुवान् तत्र स्तोत्राणि। ततस्संवत्सरसाध्यक्रतवः, नक्षत्रसवनं आदित्यसवनं, अनाहिताग्नीनां यज्ञस्थाने तद्देवत्य-स्थालीपाकः, तस्य विधानम् । सत्रयागप्रस्तावः । समाहार-सिद्धिः । पृष्ठशमनीयं। साहस्राः क्रतवः, व्रात्यस्तोमाः, अग्निष्टुतः, एतेषां स्तोत्रसामानि । ताण्ड्ये षोडशसप्तदशयोरेषां विचारः प्रवृत्तः ।

## सप्तमःप्रपाठकः

त्रिवृत्स्तोमास्त्रयः । प्रजापतेरपूर्वः । बृहस्पतिसवः, सर्व-स्वारइति । ताण्ड्येसप्तदशेप्रतिपादिताः । अत्रखण्डद्वयेन तेषां विशेषविधानं क्रियते । चातुर्मास्यानि, स्तोत्रसामविधिपूर्वक-मुक्त्वा, राजसूयेऽभिषेचनीयमधिकृत्य स्तोत्रसामनिर्वचनपूर्वकं विविरणंकृतम् । ततो राट्, विराट्, उद्भित्, बलभित्, इति द्वन्द्वानि विहितानि । अनन्तरं अभिचारयागाः श्येनादयः प्रतिपादिताः ॥

## अष्टमः प्रपाठकः

अहीनक्रतवः द्व्यहप्रभृत्येकसुत्याकाः । प्रकृतिभूतस्य द्वादशरात्रस्य स्तोत्राणि स्तोमाश्च प्रतिपाद्यन्ते ।

सर्वपृष्ठाप्तोर्यामे गर्भगर्भिणः स्तोत्रविशेषाः । चतूरात्र प्रभृतयः त्रयः आयुष्कामयज्ञाः । ततो वसिष्ठः पुत्रशोकनि-वृत्यर्थं कंचनयज्ञमाहृतवान्, विश्वामित्रः कृत्स्नराज्यप्राप्ती-

च्छया कंचन क्रतुमियाज, तयोः प्रयोगः । अश्वत्रिरात्राख्या-श्वमेत्रस्य मध्यमेऽहनि महानाम्नी पृष्ठस्तोत्रम् । तत्र घर्माः इत्यादयः ॥

नवमः प्रपाठकः

जनकसप्तरात्रम् । सर्वजनकेन ब्रह्मणानुष्ठितम् । एत-दनुष्ठाय कृत्स्नं प्रपंचं सृष्टवान् । अतोऽस्य जनक सप्तरात्रत्वम् । ततोऽष्टरात्र नवरात्र दशरात्राः प्रतिपादिताः । उद्दालपुत्रः कुसुरु-बिन्दः दशरात्रमनुष्ठायश्रेष्ठोऽभवत् । त्रयोदश रात्रादयः । द्वादश रात्रस्य सत्राहीनोभयात्मकत्वम् । एतद्विचार्यनिर्णयः कृतः ।

दशम प्रपाठकः

आञ्जनाभ्यञ्जन सर्पाणां सत्रादयः वत्सरसाध्या बहवः प्रतिपादिताः । ये ताण्डये द्राह्यायणीयेचानुक्ता विशेषाः । निदानसूत्रमिदं पतंजलिकृतमित्युक्तम् । अस्यतत्वबोधि-नीतिव्याख्या वर्तते । साच सप्तखण्डात्मकस्य छन्दोविच-यस्यैवोपलभ्यते ॥ तस्यारम्भे :—

"तातप्रसादतः कुर्वे वृत्तिं तत्वार्थबोधिनीम्" इतिवर्तते ॥ तातप्रसादः कुरुते, इतिपाठं दृष्ट्वा तातप्रसादइति व्याख्यातु-र्नाम, कल्पयन्ति केचन । व्याख्यान्तरमपि वर्तते हृषीकेश

शर्मणा [वेच्चाशास्त्रिणा] कृतम् । छन्दअधिकृत्य निबन्धाः षडधिकारसन्तीति ज्ञायते ॥ ऋग्वेदीयं पिङ्गलनाग कृतं छन्दश्शस्त्रं विस्तृतंस्फुटं च वर्तते ।

## उपनिदानम्

इदमन्यच्छन्दश्शास्त्रम् । गार्ग्येणकृतम् । ग्रन्थसमाप्तौ :—

"ब्राह्मणात्ताण्डिनश्चैव पिंगळाच्च महात्मनः ।

निदानादुक्थशास्त्राच्च छन्दसांज्ञानमुद्धृतम् ॥ इति श्लोकोवर्तते । अतः बहून्ग्रन्थानवलोक्य सारांश उद्धृतइति ज्ञायते । छन्दोविचिति सूत्रापेक्षया सूक्ष्मान्विषयान् विशदयति। छन्द आर्चिके, उत्तरार्चिके च क्रमेण प्रत्यृचं छन्दोज्ञापनेन विशदयतीत्ययं विशेषः । कदाचिद्देवाः यमभयत्रस्ताश्छन्दोभिरात्मानमच्छादयन्, अतः छन्दांसीति नाम, इति छन्दश्शब्दनिर्वचनमपरो विशेषः । ततो जलेऽवस्थिता मीनाइवोपलब्धुं न शक्यन्तेऽत अमृता अभवन् । य एवं छन्दसां तत्वं जानन्ति तेऽमृता भवन्ति इति फलश्रुतिरित्यादिकम् ।

यस्माच्च छादिता देवाश्छन्दोभिर्मृत्यु भीरवः ।
छन्दसां तेन छन्दस्त्वं ख्यायते वेदवादिभिः ।
यदा छन्दोभिराच्छन्नान्देवान्मत्स्यानिवोदके ।
नह्यपश्यत्सुरान्मृत्युरमृतत्वं ततोगताः ।

छन्दोविदेव विप्रस्तु धर्मतस्तद्गुणाश्रितः।
छन्दसामेति सालोक्यं अमृतत्वं च गच्छति।
इत्याहगार्ग्यः, इतिसमाप्तम् ॥

अत्राष्टाध्यायास्सन्ति,

प्रथमेऽध्याये—गायत्रीमारभ्य जगतींयावत् छन्दसां लक्षणमन्ये चविशेषाः।

द्वितीये—छन्दस्सु एकद्व्यक्षरन्यूनाधिकतायां निचृद्भुरिगिति संज्ञा इत्यादयः।

तृतीये—दैवासुरप्राजापत्यार्षं छन्दसां विवरणम्।

तुरीयपंचमयोः—पूर्वोत्तरार्चिकानां प्रत्येकं छन्दोविवेकः।

षष्ठसप्तमयोः—आरण्यमहानाम्न्योः छन्दः, उत्तरार्चिकस्थ चर्क्रमेण छन्दोविवरणम्।

अष्टमे—गायत्र्यादीनां छन्दसां वर्णः। गायत्री शुक्ला। उष्णिक् सारंगः। अनुष्टुप् कृष्ण इत्यादि। ततो गायत्र्यादीनां देवताः। गायत्र्या अग्निः। अन्तेफल श्रुतिः। इदं १९३१ संवत्सरे काश्यां सरस्वतीभवने मुद्रापितम्। उपनिदानं दशसूत्रेष्वनन्तर्गतं, तथापि छन्दः प्रसंगादुक्तम् ॥

द्राह्यायणादीनां दशानां सूत्राणां कल्पसूत्रत्वेऽपि तन्मध्यपतितमिदं कल्पसूत्रत्वेनैवासाधारणतया व्यपदिश्यते। मार्ग्य मशकेन कृतत्वात् मशककल्पसूत्रमित्यपि व्यपदेशो विद्यते। बोधायनापस्तंबद्राह्यायणकात्यायन कल्पसूत्रेभ्यः प्राग्रचितमिति भाति। यतः पूर्वमीमांसासूत्रभाष्ये शबरस्वामिना कल्पसूत्राधिकरणे इदं कल्पसूत्रं प्रमाणतयोपादीयते। ताण्ड्यब्राह्मण भाष्ये सायणाचार्यः बहुत्र स्थलेषु एतत्सूत्रमुदाजहार। एकादशाध्यायाः पंचदशोत्तरशतं खण्डाश्चात्र सन्ति। प्रतिपाद्या विषयाः। गवामयनीयं अभिप्लवषडह पृष्ठ्यषडहयोः स्तोमक्लृप्तिः। अभिजिद्विश्वजितौ। आयुष्टोमगोष्टोमौ। महाव्रतम्। श्येनयागः। अग्निष्टुत्। सर्वस्वारः। सौमिकचातुर्मास्यानि। अभिषेचनीयदशपेयौ। राट्विराजौ। पुनस्तोमः। ज्योतिष्टोमातिरात्रः। एकस्तोमाः क्रतवः। अश्वमेधः। वासिष्ठचतुरहाद्याः। पंचाहषडहादिक्रतवः। प्रजापतेस्सहस्र-सवंत्सरं, विश्वसृजामयनं, सहस्रसंवत्सरं, एतेषां स्तोत्रविधानं स्तोमक्लृप्तिः। अन्ये च बहवो विषयाः प्रतिपाद्यन्ते सूत्रान्तरेऽविद्यमानाः। श्रौतप्रयोगकाराः आण्डपिल्लैप्रभृतयः इदं प्रमाणमूर्धन्यत्वेन गृह्णन्ति।

इत्थं वरदराजेनवामनाचार्य सूनुना ।
ज्योतिष्टोमस्य यत्तन्त्रं, औद्गात्रंतत्प्रकीर्तितम् ॥

इत्यध्यायान्ते उक्तम् । विक्रमशके माघशुक्लैकादशी गुरूवासरः घृध्रीनगरे नागरजातीय नृसिंह-सुत- महाराणकेन- लिखितम् इति वाराणसेयसंस्कृतविश्वविद्यालये हस्तलिखितं पुस्तकं समग्रंदृष्टम् ॥

" उपग्रन्थ सूत्रम् "

उपग्रन्थ सूत्रमिदं कात्यायनमहर्षि प्रणीतम् । पाणिनीये वार्तिकं,वाजसनेयिनां श्रौतसूत्रं, श्लोकात्मिकां स्मृतिं,सामवेदीयोपग्रन्थसूत्रं च प्रणिनाय कात्यायन महर्षिरिति ज्ञायते । तथैवाभियुक्ताः आहुः ।

वाजिनां सूत्रकृत्साम्नामुपग्रन्थस्य कारकः ।
स्मृतिं श्लोकात्मिकां सम्यक् भ्राजमानां चकारह ॥
महावार्तिक नौकारः पाणिनीय महार्णवे ।
यत्प्रणीतानि वाक्यानि भगवांस्तु पतंजलिः ॥
व्याख्याच्छान्तनवीयेन महावाक्येन हर्षितः ।
योगाचार्यः स्वयं कर्ता योगशास्त्र निदानयोः ॥
एवं गुणगणैर्युक्तः कात्यायन महामुनिः इति ॥

अतः पूर्वोक्तानां ग्रन्थानां रचयिता एकएवेतिप्रतीयते ।

(अतः पूर्वोक्तानां ग्रन्थानां रचयिता एकएवेतिप्रतीयते ।) सूत्रमिदं प्रपाठकचतुष्टयात्मकम् । एकैकस्मिन् प्रपाठके त्रयोदश खण्डास्सन्ति । आहत्यखण्डाः द्वापञ्चाशत् । वेङ्कटेश दीक्षिताख्यः कश्चित् पण्डितो व्याख्यादिति श्रूयते ।

स च अप्पाशास्त्रीति विश्रुत श्रीनिवासदीक्षितस्याऽऽतुर-सन्यासेन पूर्णानन्दयतीतिसंज्ञां प्राप्तस्य पुत्रः,

श्रीनिवासाभिधो विद्वानप्पाशास्त्रीति विश्रुतः ।
पूर्णानन्दयतित्वं च प्राप्यान्ते ब्रह्मतां गतः ॥
तस्यात्मजोऽहं नाम्ना मामुर्व्यां सर्वे वदन्ति हि ।
वेङ्कटेश्वरशास्त्रीति कात्यायन महामुनेः ।
उपग्रन्थस्य तस्यैव कृता व्याख्या तदाज्ञया । इति ॥

अन्यत्र,

कात्यायनकृतस्यैव प्रायश्चित्तविधेरिह ।
व्याख्यां संग्रहतः कृत्वा प्रयोगस्य च निर्णयम् ॥
सर्वेषामुपकाराय याज्ञिकानां करोम्यहम् ॥

क्वाहं क्वचैषनिगमार्णवरत्नकुम्भः
कात्यायनस्य करुणानिधिनैवतेन ।
यत्स्वप्न एत्य कथितं क्रियतां
मदीयोपग्रन्थ भाष्यमिति व्याकुरुते तदाज्ञा ॥

विलसतिचूडामणिना कौशिकगोत्रप्रयागसन्मणिना ।

चूडामणिरिति नाम्ना रचितमुपग्रन्थ भूषणं लोके ।। इति ।

अनेन तस्यपिता श्रीनिवासदीक्षित इति ग्रन्थनाम चूडामणिरिति च ज्ञायते । अस्य पिता श्रीनिवासदीक्षितोऽपि उपग्रन्थसूत्रप्रायश्चित्तप्रकरणस्य, प्रायश्चित्तप्रदीपिकाभिधं व्याख्यानं कृतवानिति ज्ञायते । अस्यैवोपग्रन्थस्य माधवाचार्योऽपि व्याख्यां व्यरचयदिति, तेनाकृतप्रतिहारसूत्र भागस्य कल्पभाष्यकारवरदराजो व्याख्यादिति च ज्ञायते ।

तथा हि—

1. उपग्रन्थस्यवृत्तिर्माधवाचार्येण या कृता ।

तस्या वरदराजेन शेषस्संप्रति पूरितः ।।

इति प्रतिहारभाष्यान्ते श्रवणात् । एतच्चग्रन्थजातं श्रूयते ।

परं नोपलभ्यते । सूत्रमेतत् यज्ञेषु संभावितानां दोषाणां प्रायश्चित्तं विदधाति । प्रतिहारभक्तीः छन्ननिधनानां प्रयोगार्हाणि निधनानि, छन्दसां स्तोत्रीयाणांचाक्षरगणनां च व्यनक्ति । एतच्च मशक कल्पसूत्रात्परस्तात् पातंजलनिदानात्पुरस्ताच्च प्रणिनायेति ज्ञायते ग्रन्थपरामर्शेन ।

॥ प्रथमः प्रपाठकः ॥

"अथ संपत्सिद्धिरनादेशे" इत्यारभ्य यज्ञेषुविनियुज्यमानानां साम्नां छन्दांसि प्रतियागंस्तोत्रीयाणामक्षरपरिमाणं च व्यञ्ज यति। सर्पणकाले उद्गातुरपच्छेदे तंयागमदक्षिणं संस्थाप्य सएवपुनः कर्तव्यः, एषैव निष्कृतिस्तस्य। ततः सोमापहरणसोमाभिदहनसोमातिपवनादिषु यज्ञ विश्रेषेषु, आयन्तीयं ब्रह्मसाम कार्यम्। विश्वजिदतिरात्रक्रतुविमर्शः, सोमक्रय सोमाभिषवावधिकृत्य विचारः इत्यादयोनैकविधाविषयानिर्धारिताः।

॥ द्वितीयः प्रपाठकः ॥

सोमक्रयात्पूर्वं सोमापहरणे प्रायश्चित्तं नास्ति। सोमक्रयादनन्तरं सोमापहरणे प्रतिसवनं निमित्तसंभवे निष्कृतिः पूतभृतः द्रोणकलशस्य च विदारणे प्रायश्चित्तं, सोमभक्षणमन्त्राः, सोम दहनेनिष्कृतिः, ततः केषुचिद्यागेषु स्तोत्र क्लप्तिरित्यादयः प्रतिपादिताः।

॥ तृतीय तुरीयौ ॥

वैश्यस्तोमः, व्यूढद्वादशाहः, समूढद्वादशाहः, इत्याद्यहर्गणसाध्ययागेषुप्रयुज्यमानसाम्नां विवेचनम्। ततः छन्दोनिधनविषये काशीतारूढवदांगिरसादीनामुपास्थाने सूत्राः इति ज्ञातव्यम्।

वषट्कारणिधने साम्नि वषडितिनिधनम्। प्रमित्राय-प्रतिवारुणंसाम यदिवर्षणार्थं प्रयुज्यते तर्हि "हिष्कृत्यदिवंगच्छ" इतिनिधनं प्रयोक्तव्यम्। संज्ञानादिसामसु क्षत्रियाणां सञ्जित्यै इति वैश्यानां संपुष्ट्यै इत्यादिनिधनप्रयोगः। बृहद्रथन्तरयो-र्वागित्येवनिधनम्। अथप्रतिहारभक्तिः। उत्तमपादेषु चत्वार्य-क्षराणि प्रतिहारइत्युत्सर्गः। तत्र प्रतिपादं स्तोभश्चेत्प्रयुज्यते तदा प्रतिहारस्य पुरस्ताद्विद्यमानः उद्गातुः, उपरिष्टाद्विद्यमानः प्रतिहर्तुः। अयं न्याय्यप्रतिहारः। प्रतिपादं गाने समाने, अन्त्यपादस्य पूर्वः पादः प्रतिहारः अयं विभाग्यः। एवमुत्सर्ग-विधिमुक्त्वा यज्ञेषु स्तोत्रांगत्वेनप्रयुज्यमानानां साम्नां प्रतिहारः पृथङ्निरूपितः। अस्य भागस्य प्रतिहारसूत्रमितिनाम। अस्य कल्पसूत्रव्याख्याता वरदराजः व्याख्यां कृतवानित्युक्तम्। एत-त्सूत्रकारस्य कात्यायनस्य वररुचिः, पारस्करः इत्यपिनामान्तर-मस्ति। क्वचित्तथाप्रयोगात्।

॥ क्षुद्रकल्पसूत्रम् ॥

मशक कल्पसूत्रमधिकृत्य पूर्वं विचारः कृतः। तस्यैव शेषभूतोऽयं ग्रन्थः। कल्पसूत्रं सप्तदशाध्यायात्मकम्। तत्र एकादशाध्यायाः कल्पसूत्रत्वेन अवशिष्टभागः क्षुद्रकल्पत्वेन च

व्यवह्रियन्ते। यथा ताण्ड्य शेषस्य षड्विंशस्य ब्राह्मणान्तरत्वेन गणनां कृत्वा अष्टौ ब्राह्मणानीति व्यवहारः तद्वत् कल्पक्षुद्र-कल्पयोरेकत्वेऽपि पृथक्परिगणय्य दशसूत्राणीति व्यवहार-स्संगच्छते।

एतच्चसूत्रं "ग्रामकामस्य क्लृप्तोज्योतिष्टोमः प्रजाकामस्यो-पोषुजातमप्तुरमिति" इत्यारभ्य "एतेन प्रदेशेनावरएवान्तो द्वादशाहानां विद्यतेनपर इति नपरइति" एवं रूपेण समाप्तम्।

अस्य व्याख्याता शतक्रतुताताचार्यकुमारः श्रीनिवासा-चार्यः वैष्णवमतानुयायीति ज्ञायते। व्याख्यारम्भेऽयं श्लोको विद्यते।

श्रीकल्पसूत्रोपग्रन्थं कृतो गुरुवरान् भजे।
श्रीगार्ग्यमशक-द्राह्यायण-कात्यायानह्वयान्॥ इति।

॥ अत्र प्रतिपाद्यविषयसंग्रहः॥

ग्रामकामस्य ताण्ड्ये ज्योतिष्टोम उक्तः। प्रजाकामस्य ज्योतिष्टोमे स्तोत्रक्लृप्तिः गवां व्याध्युपशमाय प्रयोगः श्रैष्ठ्य-कामस्ययागः, तत्र स्तोत्रक्लृप्तिः, व्यूढद्वादशाहादन्यत्र यजमान मृतौ अग्न आयूंषि इति बहिष्पवमानं च विहितम्। ततः रोग-निवृत्तिकामस्य, वृष्टिकामस्य, पशुसमृद्धिकामयमानस्य, ब्रह्मवर्चस

प्रतिष्ठा स्वर्गादिकामनावतां यागविशेषाः तत्र स्तोत्रक्लृप्तिः स्तोत्रीयसाम्नामक्षरसंख्या न्यूनातिरेके परिहारप्रकारः इत्यादिः प्रतिपाद्यते ॥

ततः उद्गात्रपच्छेदे सोमदहने सोमापहरणे द्रोणकलश भेदने च प्रायश्चित्तम्, ऊहगाने रहस्यगाने च प्रायश्चित्त तन्त्रस्य विनियोगः अक्षरसंपदित्यादिप्रदर्शितम् ।

अनन्तरं वर्णत्रयविषयाः स्तोत्रक्लृप्तयः । रथन्तर-बृहत्पृष्ठयोर्वैलक्षण्यम् । अष्टविधगर्भगर्भिणः, तेषां नियमाः । श्रीस्तोमे पृष्ठस्तोत्रविचारः । द्वादशाहश्चतुर्विधः, तत्र बहिष्पव-मानादीनां स्तोत्राणां क्लृप्तिः निर्वचनं च । कामनाभेदेन द्वादशाहाः "अनन्ताद्वादशाहा" इत्यारभ्य बहवो विषयाः प्रति-पादिताः । त्रयस्त्रिककद्रुकाः, सप्तोद्यतः, पञ्चातिरात्राः, आभिचा-रिकाः क्रतवः, तत्र क्षुद्रसामविनियोगः । प्रायश्चित्तक्रतवः तत्र प्रायश्चित्त साम्नां विनियोगः एतादृशा अन्येऽपि प्रतिपाद्यन्ते ।

॥ तन्दा (ताण्ड्य) लक्षणम् ॥

अस्य तन्दा लक्षणमिति प्रथा विद्यते अथापि ताण्ड्य लक्षणमित्येव मूलग्रन्थेषुविद्यमानं नामधेयमुपपन्नमिति प्रतिभाति ।

अत्र त्रयः प्रपाठकाः चतुस्त्रिंशत् खण्डाश्च सन्ति। "अथ यज्ञेशब्द स्तोत्र विधिवाक्यशेषः यथामाशकं तत्प्रामाण्यात्" इत्यारभ्य, द्वादशाहानन्त्यमपि, एकमहस्तोत्रसवन तृचके साम्नां अन्यत्रान्यत् व्यत्यासेवर्चाः इति समाप्तिर्विद्यते। इदं च ताळपत्रमयं शिथिलं व्याख्या रहितं चोपलभ्यते। अतः स्पष्टतयानस्फुरति यज्ञीयस्तोत्राणां छलाक्षरमिवप्रतिभाति॥

॥ पञ्च विधसूत्रम् ॥

पंचविधसूत्रं प्रपाठकद्वयात्मकं चतुर्दशखण्डात्मकं च। इदं प्रकृतिस्थानां साम्नां क्रमेण भक्तीः प्रदर्शयति। प्रथमं खण्डचतुष्टयेन परिभाषा प्रस्तावप्रतिहारौ चप्रदर्श्यन्ते सामान्यतः। प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानि भक्तयः। तत्पांचविध्यं स्मृतं व्याख्यास्यामः। ओंकारहिंकाराभ्यां साप्तविध्यम्। इत्यादिना, एष न्याय्यो सप्तसाम पर्व इत्यन्तेन। अनन्तरं अष्टभिः खण्डैः प्रतिहारभक्ति क्रमेण दर्शयति। अन्ते खण्डद्वयेननिधनभक्ति प्रदर्शयति, निधनं पर्व सामान्त्यमृइत्यादिना, इतरेषां यथोक्तं, इत्यन्तेन। अस्य व्याख्याविद्यते हस्तलिखितग्रन्थमयी। सूत्रकर्ता व्याख्या कर्ता च नोपलभ्यतेनाम्ना व्याख्यानं च न स्फुटं। प्रस्ताव प्रतिहारनिधानि दर्शितानि। उद्गीथोपद्रवयोः तदन्तगाळत्वेन

ज्ञातुं सुशकत्वात् । पंचभक्तयः अध्ययनादिषु सप्तभक्तय यज्ञेषुप्रयोगकाले। इदं च जर्मन् भाषायां आंगलभाषयांचमुद्रापि-वमिति श्रूयते ।

॥ कल्पानुपदम् ॥

कल्पानुपदं नाम किंचनसूत्रम्। अत्र द्वौ प्रपाठकौ स्तः। एकैकस्मिन् प्रपाठके द्वादशखण्डास्सन्ति। इदं च सूत्रम् आचार्य प्रमाया[ण] निर्देशोब्राह्मणसूत्रार्षेय कल्प ऋक्समाम्नायोह्यो पदेशमाचारं चैकेनियमाभावस्त्वेवं तेषां इत्यारभ्य प्रकृति-संपन्नित्यः इति पूर्यते। ब्राह्मण सूत्राभ्यां विहितेषु यज्ञेषु बहिष्पवमानादि स्तोत्रेषु गायत्रादीनां साम्नां सान्तत्ये जामि-तादोषः स्यात् तत्परिहाराय विभिन्नरूपेण स्तोत्रविधानम् । अहीनसत्रेषु नामसुब्रह्मण्याह्वानं इत्यादयोविशेषाः प्रतिपाद्यन्ते ।

॥ अनुस्तोत्रम् ॥

श्रौत सूत्रेष्वन्तिममिदमनुस्तोत्रम् ॥ स्वरवर्णमात्राक्रम-मृद्धनियमाद्वर्णक्रमंत्राप्रवचनशास्त्रानुवचन स्वराख्यत्वात् इत्या-रभ्य उक्तंतु प्रतिसंहितं सन्ततितस्त्वशब्दः सहस्रेसहस्रे इति पूर्यते। आर्चिकपाठे स्वराः वर्णाः मात्राश्च यादृशा-विद्यन्ते तादृशा एव सामस्वपि प्रवर्तन्ते इत्युत्सर्गः। तस्यापवादः एवमिति विधीयते। प्रकृति साम्नां सन्तनि 'एषाहाउ' एत-

दन्तानां सर्वेषां विधानं विद्यत इति प्रतिभाति संपूर्णशुद्धकोशाला-भात् स्फुटं न प्रतीयते ॥

एवं श्रौतसूत्राणि दश द्राह्यायणादीनि संगृह्यप्रतिपादितानि। एतानि सर्वण्यपि मुद्रणामप्राप्तानि। ताळपत्रस्थानि कुत्र-चिदेवलभ्यन्ते।

॥ लक्षणग्रन्थाः ॥

॥ गायत्रविधानम् ॥

शुङ्गाचार्यकृतं गायत्रविधानम्। अत्र त्रयःखण्डाः वर्तन्ते। अस्य व्याख्याविद्यत इति श्रूयते। नोपलभ्यते स्वरूपतः कर्तृतोऽपि। प्रतिपाद्याविषयाः।

गायत्र साम्नः तद्वि विड्ढास्वरः प्रस्तावः। प्रथमस्वर-एव प्रस्ताव इत्यर्थः। सच प्रथमपादस्थाक्षरमात्रे गीयते। तानिचाक्षराणि गायत्रीछन्दसि अष्टौ, जगत्यां द्वादश। सर्वेष्वपि छन्दस्सु अष्टाक्षराणि प्रस्तावः शिष्टानि उद्गीथेयोजयेत् इति वा प्रस्तावभक्तिः ओंकारान्ता प्रयोक्तव्या। उद्गीथ भक्तिः सर्वापि निरुछ्वासं गातव्या। यदि नशक्यते तदा, प्रथमखण्डमात्रं तथा गातव्यम्। खण्डत्रयात्मिका उद्गीथभक्तिः। हिंआ इति प्रतिहारः। सोऽपि उद्गात्रागेयः। प्रतिहर्तातु मनसा ध्यायेत्। कामनानुसारेण निधनभेदः। बहि ष्पवमानेवक्तव्या विशेषाः।

अक्षरन्यूनतायां यकारवकारयोः विकर्षप्रकारः । एवं गायत्रसाम्नः विशेषान् विशदयित्वा सामान्तराणामपि कतिचनविशेषाः प्रतिपाद्यन्ते ।

॥ ऋक्तन्त्रम् ॥

पूर्वार्चिकानां उत्तरार्चिकानां च लक्षणमिदंसूत्रम् अत्यन्त लघुभूतम् । अत्र पञ्चप्रपाठका द्वात्रिंशत् खण्डाश्च सन्ति । एकैकस्मिन् खण्डे प्रायशस्सप्तखण्डाः सन्ति । अस्य कर्ता औदव्रजिः उत शाकटायन इत्युत्तरत्रविचारयिष्यते ।

प्रथमे प्रपाठके अक्षराणां उत्पत्तिस्थानानि उत्पत्तिप्रकारः तेषां स्वरूपं च प्रतिपाद्यते ।

द्वितीये, अक्षराणां स्थान, स्वर, मात्रा, निर्णयः क्रियते । तृतीये, तेषां संहिता, सन्निकर्ष विकाशश्चोद्यन्ते । चतुर्थे, विसर्गस्यसकारः, लोपः, अन्यस्यवर्णस्यवर्णान्तरत्वं, इत्यादि विधीयते । पञ्चमे, वर्णस्य दीर्घीभावः, द्वित्वं, मूर्धन्यभावः, इत्यादि । अस्यर्क्तन्त्र व्याकरणमित्यपि व्यवहारोविद्यते, मूलग्रन्थेषु । व्याकरण सूत्रात् लघुभूतानि सूत्राणि विद्यन्तेऽत्र । यथा लृतुलसानां दन्ताः, एतत्सूत्रस्थाने । "दन्तेत्स्लाः" इति, इचुयशानां तालु इतिस्थाने, "तालुनिश्च्ये" इति, एवमादीनि सूत्राणि नैकविधानि सन्ति । इदं "अथवाचो वृत्ति व्याख्या-

स्यामः इत्यारभ्य'' षाढ़न्त्यः इति समाप्यते। व्याख्या सहितमेतह्लाहुरु सूर्यकान्तशास्त्रिभिर्मुद्रापितं चत्वारिंशतः वत्सरेभ्यः पूर्वम्। सूत्राणामतिदुरूहत्वात् मूलकृदेव व्याख्यातवानिति केषांचिदाशयः।

॥ लघु ऋक्तन्त्रसंग्रहः ॥

लघुऋक्तन्त्रसंग्रहाख्योऽयं ग्रन्थः ऋक्तन्त्रस्थान् विषयान् श्लोकरूपेणविशदयति। प्रकरणारम्भे वक्ष्यमाण विषयान् संगृह्यज्ञापयति। यथा

"दीर्घास्तु संहिताकालेअचोव्यञ्जन पूर्वकाः।
पदकाले प्रपद्यन्ते ह्रस्वतां येत्रत्रीमितान्॥
अच्छारक्षा श्रुधीरास्वा वहा एह्यूषु युँक्ष्वतु।
अद्या शग्ध्यूष्वाजुहोता तिष्ठा ऊषुसपर्यया॥

संहितायां दीर्घाणामक्षराणां पदकालेह्रस्वतापत्तिः, यथा अच्छानन्प्रे--अच्छ—नत्प्रे। रक्षाणः—रक्ष—नः—इत्यादि।

एवं संहितायां ह्रस्वानि पदकालेदीर्घाणि भवन्ति। क्रियमाणस्य मह्वऋते। मह्वा—ऋते। सवर्णदीर्घम्। आभरास्मभ्यम् - आभर - अस्मभ्यम्। रथ्येयथाऽऽजौ - यथा - आजौ। वर्मीव -

घर्मी - इव सर्पिर्मधूदकम् । मधु - उदकम् । अपादुशिप्रन्धसः - शिप्री - अन्धसः । जवितेन्द्रस्य - जनिता - इन्द्रस्य । भानवेऽर्चा - भानवे - अर्चा-रोदसी उभे - रोदसी - उभे । परीतोषिञ्चत-इतः सिञ्चत । इत्यादौ ह्रस्वत्वदीर्घत्वे, इ, उ, यण् गुण संधयः, पूर्वरूपं, प्रगृह्यं, ओत्वमित्यादयः श्लोकरूपेण प्रतिपादिताः । अस्यकर्ता नोपलभ्यते - मुद्रापितमिति श्रूयते । अत्र अष्ट पंचाशदुत्तरशतं श्लोकाः वर्तन्ते ।

॥ ऋक्तन्त्रविवृतिः ॥

ऋक्तन्त्रविवृत्याख्योऽयं ग्रन्थः प्रकरण त्रयात्मकः । गायत्र गानप्रकाराख्य प्रथमप्रकरणे, यज्ञेषु बहिष्पवमानाज्यादि स्तोत्रेषु प्रयुज्यमानगायत्रसाम्नः गानप्रकारः उद्गीथादि भक्तिनिरूपणं ज्यायसिछन्दसि अधिकाक्षराणां उद्गीथभक्तौ आवापप्राप्तौ, तस्याः खण्डत्रयात्मकत्वात् कुत्रावाप इति विशये, प्रथमेखण्ड आवापः इत्यादि आर्षेय ब्राह्मण प्रौढब्राह्मणे प्रमाणी कृत्य, निर्णीयते । आर्षेय ब्राह्मणस्य "प्रथमस्वरैर्वा चतुरक्षर वृद्धान्तैः" इति वाक्यस्य ताण्ड्यस्य त्र्यावृद्धेयं इतिवाक्यस्य-चार्थोविचार्य निर्णीतः । ततः प्रतिहारोपद्रवनिधन भक्तिप्रदर्शनमित्यादि ।

द्वितीये प्रकरणे स्वरितनिरूपणं, अत ऊर्ध्वं प्रवक्ष्यामि ह्यार्चिकस्यस्वरत्रयम् । उदात्तश्चानुदात्तश्च तृतीयः प्रचयस्वरः । इति । अत्र स्वरितस्य स्वरान्तरत्वेनापरिगणनात् स्वरितं नाम किंचन नास्ति। उदात्तानुदात्तयोस्समाहारस्यैव स्वरितत्व व्यपदेशात्। अत्र प्रमाणानि। य एवोदात्त इत्युक्तस्सएव स्वरितस्वरः । ना शिक्षा-उन्नीचेमे, ऋक्तन्त्र - नीचे, विरामेप्रत्यये - उत् उदात्तः, स्वरितो भवति । नीचमुच्चात्, ऋक्तन्त्र उच्चात् परं यत् नीचं तद् स्वरितं भवति । एवं उदात्तानुदात्तयोरिव, स्वरितस्य स्थानं (हस्तपर्व) नास्ति इति, नारदशिक्षा ऋक्तन्त्र मात्रालक्षणाद्यनुरोधेन स्वरितस्य स्वरान्तरत्वं नास्तीति समर्थ्यते ।

तृतीये प्रचयस्य एक श्रुतित्वं उदात्तस्वरत्वं प्रमाणपूर्वकं साधयति। अयं च ग्रन्थः "अथगायत्रगान प्रकारो निरूप्यते इत्यारभ्य" आद्यार्धमात्रा एवोदात्ता भवन्तीत्यर्थ एव विवेकः इति समाप्यते । अस्य कर्तानोपलभ्यते ।

॥ सामतन्त्रम् ॥

सामतन्त्रमिदं वेयगानारण्यगानाख्य प्रकृति भागस्य लक्षणम् । पञ्चदश प्रपाठकात्मकम् । त्रयोदश प्रपाठकात्मकस्य सामतन्त्रमिति, जतुर्दश पञ्चदशात्मकस्याक्षरतन्त्रं संज्ञालक्षणमितिवा व्यवहरन्ति लक्षणविदः । अस्यरचयिता औदव्रजिः ।

ऋक्तन्त्रस्याध्यायमेव कर्तेति बहवोऽमि प्रथन्ति। संज्ञासूत्राणामैक-रूप्यागवमात्, इति हेतुं वदन्ति। तथा हि—

| ऋक्तन्त्रसूत्रम्। | सामतन्त्रसूत्रम्। | |
|---|---|---|
| 112—143 | 1—10—1 | आङ् — पादमध्यीय |
| 71—77 | 3—7—8 | अण — पादादि |
| 145 | 1—9—7<br>2—4—10<br>5—४—9 | खिङ् — पादोपान्त्य |
| 247—255 | 1—10—3 | चु — दीर्घीभवति |
| 148— | 5—4—1 | पा — पादान्तीय |
| 27—49—269 | 1—8—4<br>5—4—3 | सण — संयोग |

एतेषु स्थलेषु ऋक्तन्त्रसामतन्त्रयोरेकैवसंज्ञाकृता। उपलभ्यमानेषु ऋक्तन्त्रकोशेषु शाकटायनप्रणीतम् इति वर्तते। सर्वानुक्रमण्यां च—

ऋचां तत्र व्याकरणे पञ्चसंख्या प्रपाठकाः।
शाकटायन देवेन द्वात्रिंशत्खण्डिकाः स्मृताः॥

इति निर्दिष्टम्। नागेशोप्येवमेवाह। भट्टोजिदीक्षितस्तु पाणिनीय शिक्षा व्याख्यायां "ऋक्तन्त्र व्याकरणाख्य छान्दोग्य लक्षणस्य प्रणेता औदव्रजिरप्यसूत्रयत् इत्याह। अनन्त्यान्त्य-संयोगे मध्ये यमः पूर्वगुणः इत्यौदव्रजिः इति। अपि च ऋक्तन्त्रे

न्यायेनौदव्रजिः । "नाद इति शाकटायनः" इत्यादि वर्तते । अतः ऋक्तन्त्रस्य अनयोः कतरः कर्तेतिनिर्धारयितुं न शक्यते ।

॥ सामतन्त्रेप्रतिपाद्याः ॥

"स्वरोऽनन्त्यः" इदं प्रथमसूत्रम् । अनन्त्यः स्वरः गीतोभवति इति व्याख्यातम् । अतिस्वार्यस्वरभिन्नेषु षट्सु-स्वरेषु अक्षराणि सस्वराणि गीयन्ते अतिस्वार्येपरं अक्षरं सस्वरं न गीयत इति ज्ञायते । एवमारभ्य संज्ञापरिभाषात्मकं प्रकरणम् । तन्त्रमक्षरं सस्वरेनीचं चतुर्थ प्रथमयोः प्र-1-ख-6-सू-8 इतः प्रभृति नीचीभावः

| | | |
|---|---|---|
| अच्चं गेस्पर्शात् | 1-9-8 | - इतः उच्चीभावः |
| तानैधनोत् | 2-7-1 | - इतः वृद्धभावः |
| दिचुन्नु दिवि | 2-9-6 | - इतः नुभावः |
| प्रथमाद्यातृतीयात् | 2-10-3 | - उच्चम्-नु-अरोहणम् |
| स्वरान्तश्च | | स्वर्यते संप्रसारणम् |

3-1-1 ह॰ - इत्रुयुग्वा - चतुर्भात् - इत्यारभ्य मिन्भाव (विनतम्) आ - भावः - ओ - भावः - ए भावः - औभावः - लोपः - प्रणतम् - प्रत्युत्क्रामः - परिस्वारः - इत्यादयः त्रिशद्भावाः प्रकीर्त्यन्ते । ग्राम इह इविपरीतं विश्वोरोहतु । इदमन्तिमं सूत्रम् । अत्र त्रयोदश प्रपाठकाः एकैकस्मिन् प्रपाठकेदशखण्डाः

प्रायशस्सन्ति। अहत्यसूत्राणि 1311 - वर्तन्ते। इदं स भाष्यं हिन्दु विश्वविद्यालये - काश्यां मुद्रापितम्। ताळपत्रमयेषु साम-तन्त्रभाष्येषु ब्रह्मानन्दसरस्वतीशिष्य वेङ्कटेशदीक्षित हृदय सरो-जवसति महागणपति कृतौसामतन्त्र प्रकाशे इति वर्तते।

## ॥ अक्षरतन्त्रम् ॥

अक्षरतन्त्रम्। सामसु, आर्चिकाक्षरेषु गीयमानेषु ऋगक्ष-रादधिकानि कानिचिदक्षराणि सस्वराणि गीयन्ते, यानिस्तो-भत्वेन प्रसिद्धानि छन्दः पदपाठे स्तोभपदत्वेनाऽधीयन्तेऽध्ये तृभिः, अधिकत्वेसति ऋग्विलक्षणत्वमिति लक्ष्यन्ते पूर्वमीमां सायां नवमाध्याय द्वितीयपादैकादशाधिकरणे, "आद्यन्तदर्शनस्तो-भोविधागीतेषु सामसु" इति लक्षणग्रन्थे च विचार्यन्ते, तानि-स्तोभाक्षराण्यधिकृत्य विचारोऽत्रग्रन्थे क्रियते। अक्षरतन्त्रमिति शब्दघटकाक्षरपदस्य स्तोभाक्षरमित्यर्थः।

ऋचांस्वराक्षरविचारात्मकस्य ग्रन्थस्य ऋक्तन्त्रमिति, साम्नां विकारविश्लेषविकर्षणाभ्यासविरामादिविचारात्मकस्य सामतन्त्रमिति च यथा संज्ञा, तथा स्तोभाक्षरविचारात्म-कस्यास्याक्षरतन्त्रमिति संज्ञालक्षणमिति च संज्ञा। अत्र प्रपाठ-कद्वयं षड्विंशतिः खण्डाः षष्ट्युत्तर द्विशत सूत्राणि च विद्यन्ते। सामतन्त्रस्य पंचदशप्रपाठात्मकस्य शेष भूतोऽयं ग्रन्थ इति

प्राचाम्मतम् । सामतन्त्रमूलपुस्तकेषु ताळपत्रात्मकेषु तथा दर्शनात् सर्वानुक्रमणिकायां सामतन्त्रप्रस्तावे तत्र प्रपाठकाः प्रोक्तास्तिथि संख्यामुनेर्मताः इत्युक्तेः, उपाकर्मणि पृथगनारम्भा स्ववेदारंभसमये । अत औदव्रजिः कर्तेत्यनुक्तिसिद्धम् ।

अस्याक्षरतन्त्रस्य सत्यव्रतसामश्रमी व्याख्यानंकृतवान् । तत्र आपिशलिप्रोक्तमिति कथयति । प्रामाणिकास्तत्र मानम् । अपि च ग्रन्थोऽयं पाणिनीय व्याकरणात् यास्क, निरुक्ताच्च प्राचीनः, पाणिनीय व्याकरणे यास्कनिरुक्ते च गार्ग्यशाकटायन गोत्रकृत् स्मरणात्, आपिशलेश्च सामतन्त्रकृद्गार्ग्यस्य ऋक्तन्त्रप्रणेतुश्शाकटायनस्य च समकालिकत्वात् इति चाभिप्रैति, सत्यव्रतसामश्रमीभट्टः । अस्मिन् ग्रन्थे प्रथमे खण्डे अक्षराणां संज्ञा, द्वितीयादिषु षट्सु अक्षराणां प्रयोगविधिः, ततः आसमाप्तेः अक्षरगतस्वर पर्वणां विधिश्च निर्दिश्यते । एतेषां परिज्ञानमध्येतॄणामावश्यकम् । द्वितीयपुस्तकमपि न लभ्यते लब्धमपि शिथिलमाद्यन्त दुष्टमिति सत्यव्रतसामश्रमिभट्टाचार्यः खिद्यते । तथापि मुद्रापयामसेति श्रूयते ।

तत्रादिमं सूत्रं "अनृगाद्यक्षरम्" इति ऋगक्षरभिन्नं यत् साम्नि दृश्यते, तदक्षरमिति । तस्यैवस्तोभ इति संज्ञा स्तोभाश्च

हाउ, होइ, औ, ओ, हो, इट् एवमादयः। एतेषां सामसुप्रवृत्तिः विचार्यतेऽत्रग्रन्थे ॥

सामतन्त्र प्रकाशिका

सामतन्त्र प्रकाशिकाख्योऽयं ग्रन्थः सामतन्त्रभाष्यस्य विवरणात्मकः । उदाहरणप्रत्युदाहरणानि विविच्य दर्शयति । इदं महागणपति कृतमितिज्ञायते ग्रन्थान्ते तथादर्शनात् ।

सामतन्त्रपोतम् - सामतन्त्रसंग्रहः

अत्र प्रकृति साम्नां ओग्राइप्रभृति उभयामीत्यन्तानां प्रत्येकं यावन्ति सूत्राणि प्रवर्तन्ते तावतां तचत्साक्षि समन्वयं करोति। यथा ओग्राइ - अस्मिन् पदे - 'ग्नितुडाद्येषु' - वरित्र-मात्रः - असमिनः - सर्वोन्तः, एतानि चत्वारि सूत्राणि प्रवर्तन्ते । एवं एकैकं साम लक्षयति । अस्यारम्भ एवम् ।

"ऋग्विहीनं छन्नगानं लेशं स्तोममृचासह ।
आविर्गानं स्तोमहीनं एवं गानत्रयं विदुः ॥

इदं वान्छिनाथकृतमिति ग्रन्थान्तेलिखितम् ॥

फुल्लसूत्रम् - पुष्पसूत्रमितिवा

इदं च सूत्रं ऊह्योहयोः लक्षणात्मकम् । वररुचिकृतमिति प्राचीन ग्रन्थेषु दृश्यते। औदव्रजिकृतमितिकेचनाभिप्रयन्ति ।

पुष्पर्षि कृतमित्यन्ये । अस्याजातशत्रु भट्टोपाध्याया व्याख्या-तारः । व्याख्यानंचातिगंभीरमर्थपुष्टिपुतं च । रामकृष्ण कृष्ण दीक्षितः नानाभाइ इतिनाम्ना विस्तृततया व्याख्यां कृतवान् । तत्र सूत्राणां प्रत्येकं उदाहरणप्रत्युदाहरणानि वि-शदतयाविद्यन्ते । शिवरामइति कश्चन पण्डितः व्याख्यादिति श्रूयते । उत्तरदेशे तस्य प्रसिद्धिः । अस्मिन् पुष्पसूत्रे दश प्रपाठकाः एकैकस्मिन् प्रपाठके प्रायशः दशखण्डाश्च सन्ति । एकोनात्रिंशदुत्तरशतं खण्डा विलसन्त्यत्रग्रन्थे । प्रथमेद्वितीये च प्रपाठके ऊहरहस्ययोः साम्नां क्रमेण आर्चिकं, नामधेयं च व्यनक्ति । उच्चामहीनारवजये प्रत्वोशनंकयादे व्यमित्या-दिना ।

तृतीये चतुर्थे च प्रपाठके तालव्याक्षराणि यदा वर्धन्ते तदाआयिभावं प्राप्नुवन्ति । यदि नवर्धन्ते तदाप्रकृति भावः । एवमुत्सर्गविधिं दर्शयित्वाऽनन्तरं अपवादान् बहुविधान् व्यनक्ति । यथा, "तालव्यमायियदृवृद्धम्" "अवृद्धं प्रकृति" 'ए, इ, ऐ, ई, इत्येतानि'— 'आयिप्राप्तमोयि भवति; "हि शब्द एवाहिसौभरामहीयवयोः" इत्यादिना, तदनन्तरं षड्भिः प्रपाठकैः षोडश भावान्दर्शयति । आहत्य फुल्लसूत्रे अष्टादश भावाः प्रकीर्त्यन्ते ॥ ते यथा—

१. आयिभावः

तालव्यमायियद्वृद्धम्—उच्चाताइजातमन्धसाः।

२. प्रकृति भावः

अवृद्धं प्रकृति—यौधादेवस्तावे—दे ३ वो—

३. वृद्धभावः

सोमरामीवर्तजयानां वृद्धं तुरीयम्—सौभरे—वया ३ मू ३ त्वा

४. अवृद्धभावः

अपीयूवा जे तींषि....प्रत्ना ३, १० पी ३ यूं

५. स्तोभगतागतम्

अगतिः स्तोभस्यस्वरे प्रत्ययेसन्धौ—औहौ अग्ने विवस्व दुषसा ३ ए'गतिर्विरते अस्यप्रत्ना ३०। हौ ३ हो ३-१ इ।

६. उच्चनीचम्

वादौमन्ते नीचैः पुना प्रत्नं....पुना नस्सोमधारया (समन्तम्) अनितन्द्रन्तवाऽत्वारं पर्यौ प्रान्त्ययोः इन्द्रं विश्वाअवीवृधन्. आष्टादंष्ट्रम्।

## ७. सन्धिवद्गानम्

मृदश्चन्दः प्रथमस्वरः पवस्वशंकुद्वितीयायां—महिषुक्षा-
र्षभाः —मदो

## ८. पदवद्गानम्

अःकारोवृद्धः पदगीतः—पुरो ३ हाइवाः—

## ९. अत्वम्

आकारोऽत्वम्; पाशन्दः...न्यायां पार्थवाराहकुत्सरथी-
यादिषु। शुचि व शुःपवाकाः

## १०. आर्भावः

वृद्धमृवर्णसर्वमार्भवतिषकार, स्पर्शयोः प्रत्ययोः मन्ताः
काऽ 23 र्णाम्

## ११. विश्लेषः

क्वचिप्रश्लिष्टाः स्वरस-
न्धयः पादमध्ये साम्निविवृताये
तान्वक्ष्यामः। महेऽवस इमा
उवायां वार देव्य रथ बृहत्सु।

अयंवामहे अवसे शची
वसू 34। वारवन्तीयम्।

## १२. प्रश्लेषः

श्लिष्येतु प्रश्लेषः–

अयं वा महे३वसे अचीक-
स्त्रविशं विशाँहि, श्लिष्यम्।

## १३. संकृष्टम्

यस्सं योगोयवान्तः क्वचि-
त्संकृष्टः क्वचिद्विकृष्टः तत्र संकृष्ट-
ग्रहणम्। न्यर्यस्साहीयपर्ण वर्ण-
मित्रविलंबेषु

एना 34 विश्वान्यर्यआ
सत्रासाहीय

## १४. विकृष्टम्

नैढे

एनाविश्वा निअर्या3आ

## १५. लोपः

आइःकारस्यमेस्वरे प्रत्यये
ग्रहणैः विसर्गलोपः। स्याभिर्यस्ते
सुरूपे। व्यञ्जनमपरांगं विरामे
लुप्यते।

सूपस्थामाऽइ = मा-हिंष्ठो-
मात्सादन्ध, व्यञ्जनलोपः
वामदेव्यम्

## १६. अतिहारः

अवृद्धादिपदान्तात्स्वरे
परेयकारोव्यवधीयते उपदान्ता-
यवकारोतिकर्षेस्सर्वत्र, तत्रचा
लोस्सन्धौ विरतेलोपः।

अबोधिया-त्रिवरूथं सुव-
स्तयाइ

१७. आभावः

शुद्धमन्तः पदेतालव्यमा प्रतिभागं - नदा८३
भवति हादौस्तोमे प्रत्यये । हा८३इ ।

१८. विकारः

विकाराहिप्रत्यक्षपरोक्षा - पम्री ८० वयममृतम् ,प्रति-
द्वयः—दीर्घकर्षणस्यवृद्धिः । भागन्नदी₂धिमः ।

अत्र पुष्पसूत्रे अन्तिमखण्डद्वयं प्रस्ताव भक्ति प्रदर्शन-परम् । उद्गीथादीनामन्यत्र विस्तरशः प्रतिपादनात् अत्र प्रस्ताव-मात्रमुक्तम् । " अथोहगीतीनां प्रस्तावोद्देशः " । इत्यारभ्य प्रस्ता-व्येवामन्तनिनः इतिपूर्यते । प्रस्तावभक्तिः कुत्रचित् पादशः, कुत्रचिदक्षरशः, - वान्ता, जारान्ताच, कुत्रचित् - हाउ कारान्ता- कुत्रचित् - कुत्रचित्साम्नि प्रस्तावद्वयं, कुत्रचित्प्रस्ताव एव नास्ति, इत्यादिविषयाः प्रतिपाद्यन्ते ।

फुल्लपोतमिति कश्चनग्रन्थोविद्यते । तत्र आमहीयव-मारभ्य ऊह रहस्यस्थानां सर्वेषां साम्नां प्रत्येकं विषयीकृत्य एकैकस्मिन् साम्नि यावन्तिसूत्राणि प्रवर्तन्ते तावतां समन्वयः क्रियते । इदं व्युत्पत्सूनां महते उपकाराय भवति । चौकम्पा-मुद्रणालये वाराणस्यां मुद्रापितमजातशत्रुभट्टोपाध्याय भाष्य-सहितं त्रुटयादिदोषबहुळं दृश्यत इति, समीकर्तव्यम् ।

## आर्षेयदीपिका

आर्षेय दीपिकाख्योऽयं ग्रन्थः ग्रामेगेयारण्येगेययोः विद्यमानानां ऋचां साम्नां च क्रमेण ऋषीन् ज्ञापयति। यद्यप्यार्षेय ब्राह्मणेन ज्ञातुं शक्यते। तथापि तत्र विकल्पेनवा समुच्चित्यवा बहवः ऋषयः बह्व्यश्चदेवता ज्ञाप्यन्ते तेषां निर्धारणे प्रमाणग्रन्थमन्तरा बुद्धेः क्लेशो भवति। तादृश क्लेशं विना एकैकस्य साम्नः ऋषिरयमिति निर्दिशत्ययं ग्रन्थः। तद्वत् देवताविषयेऽपि। अपि च एकस्यामृचि एकं साम, द्वेसामनी, बहूनिसामानि इति अनेकधा विद्यते। तत्र प्रतिसाम ऋषिरयमिति निर्विचिकित्सं विवेचयतीयं दीपिकेव। किंच दिशांव्रतं दशानुगानं, कश्यपव्रतं दशानुगानं, महादिवाकीर्त्यं, पुरुषव्रतं, आदित्यव्रतमेकविंशत्यनुगानं इत्याद्यार्षेय ब्राह्मणपठितानां वाक्यानां विविच्यार्थाविष्करणे बहूपकरोति। अयं च ग्रन्थः आर्षेयब्राह्मणस्य संकुचित व्याख्यारूपइत्यपि वक्तुं शक्यते। अत्र आर्चिकानां साम्नां च विभाजकधर्माणां प्रपाठकत्वेनाध्येतृप्रसिद्धानां अध्यायत्वेन व्यवहारः, खण्डानामनुवाकत्वेन व्यवहारश्च विद्यते। अस्यग्रन्थस्य रचयिता भट्ट भास्कराध्वरीन्द्रइति ज्ञायते। तथाचारंभे श्लोकाः॥

वेद साम्नामृषिश्छन्दः प्रकारा अथदेवताः ।
आर्षेयाद्यनुसारेण भूत्यै भास्कर यज्वना ॥

काश्यपान्वयसंभूत भास्करामिधयज्वना ।
अनेक ऋषिदृष्टानां .... प्रकीर्त्यते ।

प्रतिहारार्षेय कल्प सूत्र दृष्ट श्रुतावपि ।
प्रकृतीनामृचां साम्नां ऋषिश्छन्दोऽथ देवता ॥

इदं ताप्रत्ययो नाम इयत्ताच विचार्यते ।
आर्षेय भरत.... .... ....सामानु सारतः ॥

एवं त्रुटिताएवोपलभ्यन्ते । इदं पुस्तकं तिरुप्पति केन्द्रीयविद्यापीठे मुद्रापितम् टिप्पणि, अनुक्रमणिका, विशेष-विमर्शन पुरस्सरं सामविद्परिशीलिततया नातीवशुद्धम् । तथापि मुद्रापणेनाविष्कृतत्वाद्बहूनामुपकारकम् । तत्रापि आरंभश्लोका एवमेव वर्तन्ते ।

अत्रत्याविषयाएवम्

पूर्वं भाषणानन्तरं आग्नेयमैन्द्रं पावमानमिति त्रीणि पर्वाणि । आग्नेय साम्नां अग्निर्देवतेत्युत्सर्गः । ऐन्द्राणामिन्द्रः । पावमानानां सोमः । क्वचिद्विशेषस्तत्र तत्र वक्ष्यते ।

### आग्नेयं पर्व-

अग्न आयाहीत्यादितस्त्र्यनुवाकानां गायत्रीछन्दः। चतुर्थप्रभृतीनां त्रयाणामनुवाकानां बृहतीछन्दः इत्यादि-एवमैन्द्रं पर्व, पावमानंपर्व, आरण्यकं इति क्रमेणानूद्यते। ततः "अथ ऋचां साम्नांचक्रमेण ऋषय उच्यन्ते। अग्न आया हि, इत्यस्याऋचः भरद्वाजऋषिः। तत्साम्नां प्रथमस्य पर्कस्य गौतमः। द्वितीयस्य बर्हिष्यस्य कश्यपः। तृतीयस्य पर्कस्य गौतमः। इत्यारभ्य क्रमेण सर्वेषां साम्नां अनुगानानां च विविच्य ऋषीनुक्त्वाऽन्ते विदामघवन्नित्येकंसाम, विदामघवन्नित्येकाऋक्, विदाराये सुवीर्यमित्युत्तरा, इन्द्रन्धनस्य सातये इत्युत्तमा। तासु एविदा मघवन् - एविदा राये ए इन्द्रन्धनस्य इत्येकं साम। तदेवसिमाः, शक्वर्यः मह्निण्यः, महानाम्न्यः इति व्यवहरन्ति। ऋचामिन्द्रः शक्री, इन्द्रो देवता। साम्नामिन्द्रः ऋषिः, ऋचां प्रजापतिः, विष्णुः, विश्वामित्रो वा ऋग्वच्छन्दोदेवते। पुरीष पदानि सर्वाण्यैन्द्राण्येव। तन्नियामकत्वेन सर्वदेवानां बलरूपेण इन्द्रस्संबोध्यते, इति पठ्यते। नैतावत्पर्यन्तमस्मद्देशे प्रसिद्धिमलभतैषग्रन्थः।

### नैगमम्

नैगमाख्योऽयं ग्रन्थः प्रपाठकद्वयात्मकः। प्रथमे प्रपाठके पूर्वार्चिकानां उत्तरार्चिकानांच प्रत्येकं ऋषयः प्रोच्यन्ते। द्वि-

तीये प्रपाठके पूर्वोत्तरार्चिकानां पृथक् देवता निर्दिशति। अर्षेय-ब्राह्मणं तावत् प्रकृतिसाम्नां ऋषीन् क्वचिद्देवताश्च निर्दिशति। अर्षेयदीपिकातु प्रकृतिस्थानामृचां साम्नां च ऋषीन् देवताश्च ज्ञापयति। इदंतु पूर्वोत्तरार्चिकानां सर्वेषामपि ऋषीन् ज्ञापयतीति न गतार्थता। अस्यारंभ एवम्। "अथार्षमार्चिकस्याग्ने त्वमग्नेऽग्निः" इति। प्रथमतः समष्टिरूपेणाभिधाय ततः व्यष्टिरूपेण कथयति। कासुचित् ऋक्षु पादस्य पृथक् देवताः कथयति। उत्तरासु ऋक्षु प्रकृतौ अपठितानामेव ऋचां देवता अभिधत्ते। कानिचित् वाक्यानि प्रदर्श्यन्ते। अग्न आग्नेयं प्राक्कद्रः। तद्व-ऐन्द्रं प्रागुच्चा। उच्चात आसमाप्तेस्सौम्यम्। रहस्यास्वृक्षु देवता अनुक्तास्ता ऐन्द्र्यः। इति सामान्यरूपेणाभिधायविशेषतः कथयति। पादेदेवता भेदः। उदुत्तमं वारुणी आदित्यस्तृतीयः पादः। अरूरुचत्सौमी पित्र्यश्चतुर्थः पादः। इत्यादिकथयति। सायणाचार्यः स्वीयसामवेदभाष्ये इदं प्रमाणतयाऽग्रहीत्। अग्नेर्विवस्वादित्यत्र ग्रन्थान्तरशब्देन। अस्य नैगेयम् नैगेयार्चिकमिति नामान्तरमपि विद्यते। नैगस्य कर्ता नोपलभ्यते।

## सामवेद सप्तलक्षणम्

सप्तलक्षणमिति आर्चिकानां लक्षणग्रन्थः। अस्यकर्ता नारायणाख्यः कश्चित्पण्डितवरः। अत्र प्रकरणानि सप्त-

श्लोकाश्च अष्टत्रिंशदुत्तरशतसंख्याकाः । एवमेव यजुर्वेदस्य सप्तलक्षणमितिग्रन्थो वर्तते । तत्र विलङ्घ्यप्रकरणारंभेऽयं श्लोकोविद्यते ।

प्रणम्य भारतीं देवीं सर्वलोकैकमातरम् ।

नारायणः प्रवक्ष्यामि विलंघ्यानि पदान्यहम् ॥ इति वपरप्रकरणारंभे - "औरिसूनुः प्रवक्ष्यामि" इति आनंग्यारभे

मुनि मानसमन्थान पथितागमसागरात् ।
उदिताय नमो भूयादमृताय मुरारये ॥
गुणत्रय विहीनाय जगत्रय विधायिने ।
श्रुतित्रय दृशे शश्वत् पुरत्रयमथे नमः ॥

इति च वर्तते । अन्तिमौ श्लोकौ अत्रापिवर्तेते अन्तिमप्रकरणारंभे । अतः उभयोः कर्ता एकएवेति, तस्य नारायण इति नाम शौरेः पुत्रः इतिच ज्ञायते । अपिच गुणत्रयविहीनाय, मुरारये, पुरत्रयमथे, इतिश्लोकेविद्यमानत्वात् अद्वैतमतानुसारिण इति ज्ञायते ।

प्रतिपाद्याविषयाः

प्रकरणम्—१-२-समानम् । विसर्ग लोपालोपौ ।

आकारः प्लुत पूर्वोयो घोषवद्व्यञ्जनोत्तरः ।

शसकार परश्चैव विसर्गस्सतु लुप्यते ।
संहितायामृचां तानि पदान्यत्र विवृण्महे ।

उदाहरणम् । इतरा विदाम्रुनि, स्तोमा देवा रुद्रा । वि वरणम् । अग्नइत्थेतरागिरः । विदागाधं तुचेतुनः । पवमान विदारयिम् । अयं संहिता पाठः । पदपाठ स्त्वेवम् । अग्ने - इत्था - इतराः - गिरः । विदाः - गाधं - तुचे - तु - नः । पवमान - विदाः - रयिम् । अत्र यादृशेपदे विसर्गः पदपाठे- संहितायां तत्रैव विसर्गलोपः । अस्य शमानमिति संज्ञा ।

## प्रकरणम् ३-रङ्गम्

रंगस्तु द्विविधोज्ञेयः स्वर परो व्यञ्जनपरः ।
नकारवैकृतं चात्र नासिक्यं रंग उच्यते ॥

उदाहरणम् । कलशाँ अचिक्रदत् । दाशिवाँ वोचे । पदपाठः - कलशान् - अचिक्रदत् । दाशिवान् - वोचे ।

## प्रकरणम्-४-विलिंध्यम्

एकारैकार वर्णौयौ संहितायां विकारिणौ ।
तदन्तानि विलिंध्यानि उच्यन्ते वेदवित्तमैः ॥

उदाहरणम् । अग्न आयाहि - वन्दद्ध्या अग्निम् - अहये न्तवाउ - अत्र-ए-ऐ, इति द्वयमपि अ-आ-इति संहिताया विक्रियते ।

## प्रकरणम्-५-नपर तपरे

नकारतकारान्तयोः सन्धिविषये निश्चयः - उदाहरणम् आसन्नःपात्रं जनयन्त । महान्महीभिः । सनादग्ने । यन्मातृरज-गन् - वचस्तच्चिन्न ओहसे - उन्नयामि - इत्यादि । एषां पद-पाठः - आसन्-नः । महान् - महीभिः - सनात् - अग्ने । यत् - मातृः । तत् - चित् - उत् - नयामि ।

## प्रकरणम् - ६ अवर्णि

ओदेद्वर्णं संछन्नं संहितायां पदादिगम् ।
अवर्णं ज्ञातुमस्माभिः इदं शास्त्रं प्रणीयते ॥

उदाहरणम् । युद्धयोऽस्माकम् । अस्या नवेऽसि प्रश्नर्यतुर्वशे । दोषो आगात् । याइन्द्र भुज आभरः । पदपाठः । युद्धयः - अस्माकम् । आनवे - असि । दोषः - आ - अगात् । आ - अभरः । अत्र अवर्णः संहितायां, ओत् - एत् - अवर्णाः, एतैः संछन्नः वर्तते । सचावर्णः पदादिगः ।

# प्रकरणम्—७

## अनवग्रहः—अनिङ्ग्यम् ।

अनिङ्ग्यमित्यस्य अवग्रहरहितमित्यर्थः अवग्रहमित्यस्य वेष्टन पदमित्यर्थः। वेष्टनपदरहिताऋचः उदाह्रियन्तेऽत्र त्वमग्ने-यज्ञानां होता । एष्वूषु ब्रवाणिते। आदित्प्रत्नस्यरेतसः । इत्यादि। अस्य लक्षणग्रन्थत्वात् पारिभाषिकशब्दा बहवो विद्यन्ते। अतः अध्येतृभिरेव ज्ञातुं शक्यते। अध्येतृणामावश्यकमे-तद्ग्रन्थपरिज्ञानम् । यजुर्वेदसप्तलक्षणस्य व्याख्या वैद्यनाथ-कृता, कुम्भघोणस्थ शारदाविलास मुद्रणालये मुद्रापिता, वर्तते । नैवं सामवेद सप्तलक्षणस्य व्याख्या विद्यते । उभयोस्सप्तलक्षणयोः कर्ता एक एवेति पूर्वमुक्तम् ।

## अवग्रहसूत्रम्

अवगृह्यं नाम आर्चिकानां पदपाठे यादृशंपदं विभक्तंसत् आवर्त्यते तत् । तादृशमवगृह्यं पदमत्र निर्णीयते । इदं द्वादश-सूत्रात्मकम् । "अथावगृह्यमति चतुरक्षरंपदम्" इत्यारंभः। चतुरक्षराधिकं पदं, यस्मिन् पदे पंचाक्षराणि तदधिकानि वा सन्ति तत्पदं अवगृह्यत इत्युत्सर्गः । हव्यदातये हव्य - दातये - इत्युदाहरणम् । एवं विश्ववेदसम् - और्वभृगुवत् इत्यादि ।

“विभागे च” पदविभागे यस्य चतुरक्षाधिक्यं भवति तदप्य-वगृह्यम् । नर्यापसम् - नर्य - अपसम् । दध्याशिरः - दधि-आशिरः । द्वादश सूत्रैरवग्रह विधिमुक्त्वा ।

“चिकितिश्चुक्रुधं चैवेत्येताश्च प्रकृतयो नावगृह्यन्ते” इति समाप्यते । अस्य मूलकर्ता व्याख्याता च नोपलभ्यते नाम्ना ॥

## हितवाक्यम्

अयं ग्रन्थः ऋक्षु एकैकस्यां वेष्टनपदानि कति इति अकाराद्यक्षरकथनेन सूचयति । सूचनविवरणमेवं कृतम् ।

अकारे पंच ऐकोवा आकारेद्वौ षडेववा ।
इवर्णे सप्तवात्रिर्वा उवर्णे चतुरष्टवा ॥
एऐ ओ औतु इत्येते विज्ञेया अन वग्रहाः ॥

अकारे श्रुते - एकं - पंचवावेष्टनानि विद्यन्त इति जानीयात् । आकारे श्रुते - द्वे - षड्वा - इवर्णे श्रुते - त्रीणि - सप्तवा-उवर्णेश्रुते - चत्वारि-अष्टौवा-वेष्टनपादानीति जानीयादित्यर्थः । ए - ऐ - ओ - औ - एतेषां श्रवणे अवगृह्यं नास्तीति विद्यात् । “धर्मोपादानं सन्तोषः श्रेष्ठः” इदं प्रथमवाक्यम् । अत्र - ध - इत्यत्र अकारो गृह्यते - अनेन, प्रथम ऋचि - अग्न -

आयाहीत्यत्र एकं वेष्टनपदं विद्यतइति ज्ञायते। तच्च पदं—हव्यदातये-इति। अत्र दशाक्षराणि विद्यन्ते। तानि प्रथमखण्डस्य दशानामपि ऋचां क्रमेण वेष्टनसूचकानि। एवं रूपेण एकस्मिन्वाक्ये यान्यक्षराणि वर्तन्ते तानि तत्खण्डस्थ ऋचां वेष्टनसूचकानीतिविद्यात्। धर्मो-इत्यत्रद्वितीयमक्षरं-ओकारः—सच द्वितीयर्चि वेष्टनपदाभावसूचकः। त्वमग्नेयज्ञानामित्यत्र वेष्टनपदं नास्ति। अत्रत्यानां वाक्यानां लक्ष्यविशेषसूचकत्वेऽपि, वाक्यार्थे सामान्यधर्मबोधकत्वं विद्यतइति विचित्रतया रचितोऽयं ग्रन्थः। तथाहि - "अशीलस्याचारो न भ्राजते" "आचार्यस्याज्ञां कुर्वीत" "कल्याण भाजी न स्त्रीवशः। "नाश्रद्दधाने कीर्तिश्शाश्वतं तिष्ठेत्। "मितभं क्तासदा न बाध्यते रोगैः। एपु वाक्येषु अक्षरार्थबोधकत्वेऽपि, शीलस्यावश्यकत्वं, गुर्वाज्ञानुवर्तित्वं, स्त्र्यवशत्वं, श्रद्धानत्वं, मितभोक्तृत्वं, इत्यादयो धर्मा अवश्यानुष्ठेया वाक्यार्थतया बोध्यन्ते। एवं "सुचित्तो दानं दया ह्रीः कृत्स्ना क्षमासत्यं प्रथमः" इति स्तोमपदस्यापि विद्यते। "उत्तरार्चिकपदस्यापि वेदो धर्मायैवा देवोऽत्र" इत्यारभ्याऽऽसमाप्ति छलाक्षरं विद्यते, अस्यकर्ता नोपलभ्यते।

स्तोभानुसंहारः

साम्नि गीयमाने ऋग्व्यतिरेकेण स्तोभो नाम गानसाधनं पदं विद्यत इत्युक्तम्। तादृशस्तोभानां कुत्र गानमिति

विचारोऽस्मिन् ग्रन्थे क्रियते । श्लोकरूपेण वर्ततेऽयं ग्रन्थः । चतुश्चत्वारिंशच्छ्लोका विद्यन्तेऽत्र ।

"आद्यन्तदर्शन स्तोभो विधागीतेषु सामसु ।
पादे पादेऽनुसंहार्यस्सोपायो निधने भवेत् ॥

इत्यारंभः । प्रकृतौ साम्नि आरंभे समाप्तौच स्तोभः विद्यतेचेत्, सः पादे पादे प्रयोज्यः यज्ञेषु प्रयोग काले । यथा धेनुसाम्नि ।

"अन्वयी चानुषंगीच द्वौ स्तोभावनु कीर्तितौ ।
अन्वयी तु पदादौस्यादनुषंगी पदात्परः ॥

पदारंभे विद्यमानः स्तोभः अन्वयी पदावसाने विद्यमानोऽनुषंगी । एवं संज्ञा । एवं ग्रामेगेयारण्येगेययोः स्तोभप्रयोगः यज्ञेषु प्रयोगकाले प्रयोगश्चात्रनिरूपितः ।"

पदं पदं विधांमात्रां छन्दो विज्ञाय दैवतम् ।
आर्षं च ब्राह्मणं चैव ततस्साम प्रयोजयेत् ॥

अक्षरज्ञो विरामज्ञः प्रत्यारंभी तथैवच ।
स्वरमात्राविभागज्ञस्सविप्रो गानमर्हति ॥

सामस्वरविधिज्ञश्च पङ्क्ति पावन पावनः ।
किमर्थमनुसंहार्यो विधौ पादे पुनर्भवेत् ॥

अनग्नत्वात्तु वै साम्नां न्याय एष विधीयते।
उद्धारः पुनराचार्यैः स्वाध्याये लाघवार्थिभिः ॥

प्रोक्तस्तस्मिन् प्रतिष्ठा च संहारस्तेन इष्यते ॥

इति लक्षणपरिज्ञानस्यावश्यकतामुपपाद्यसमाप्यते । स्तोभं प्रति सामविधानब्राह्मणे "तस्य हवा एतस्य साम्नः ऋगेवास्थीनि स्वरोमांसानि स्तोभालोमानि इति" साम्नः श्लक्ष्णता प्रयोजकत्वमुक्तम् स्तोभस्य ॥ अस्यकर्तानोपलभ्यते ।

## मात्रा लक्षणम्

मात्रानाम कालविशेषः । वेदाक्षराणामुच्चारणसमये कालस्य परिच्छेदोविद्यते । अन्यूनानतिरिक्ततया प्रयोग एव वेदफलं भवति । तदर्थं सामवेदीयकौथुमशाखायां आर्चिकानां साम्नां च मात्रानियमोऽत्र प्रतिपाद्यते । अतः मात्रालक्षणमित्यस्यसंज्ञा । यद्यपि शिक्षासु मात्रामधिकृत्यविचारो वर्तते । प्रतिवेदंशिक्षाचप्रातिस्विकी भवति । तथापि सामवेदस्यस्वरबाहुळयात् मात्रा विचारार्थमेव कश्चनग्रन्थः प्रवृत्तः ।

"अथातोह्रस्वदीर्घप्लुतमात्राण्यक्षराणि व्याख्यास्यामः" इत्यारंभः । सामस्वर्धमात्रमणुमात्रं च । ह्रस्वम्मात्रा, दीर्घंद्वे प्लुतं वृद्धं चेति त्रिमात्रमभिधीयते। ह्रस्वं द्विमात्रसंयुक्तं प्लुत-

माहुर्मनिषिणः । दीर्घंतु मात्रासंयोगाद्वृद्धमित्यभिधीयते । मात्रायाश्चतुर्थोऽशोणुमात्रानाम । अक्षराणि त्रिविधानि ह्रस्व-दीर्घप्लुत भेदात् । एकमात्राकालमक्षरं ह्रस्वम् । द्विमात्र-मक्षरं दीर्घम् । त्रिमात्रंप्लुतम् । ऋचि ह्रस्वमक्षरं साम्नि त्रिमात्रं गीयतेचेत् तत्प्लुतम्, ऋचि दीर्घमक्षरं साम्नित्रिमात्रं चेत् गीयते-तद्वृद्धम् । पादमात्राया अणुरितिसंज्ञा । ह्रस्वत्वादि धर्माः अचामेव न व्यञ्जनानाम् । वृत्तिस्त्रिविधा-द्रुता, मध्यमा, विलम्बिता चेति । द्रुतायां त्रिकलामात्रा - साचामुखी करणे । मध्यमायां चतुष्कला - साच प्रयोगसमये । विलम्बि-तायां पंचकला - साचगुरोर्ग्रहणसमये, वैस्वर्ये प्रतिस्वरं त्रिमात्रं भवति । "विस्वरमक्षरं स्वरे स्वरेत्रिमात्रं भवति" हीऽ234षी इत्यादौ । प्रणवःसार्धत्रिमात्रः । एवम्मात्रानियममुक्त्वा आरो ह्वावरोहौविवेचयति । प्रत्युत्क्रामातिक्रम कर्षणस्वाराः । प्रत्यु-त्क्रामोऽष्टविधः अतिस्वारो मन्द्रं प्रत्युत्क्रामति । मन्द्रश्चतुर्थं । चतुर्थस्तृतीयं - तृतीयोद्वितीयं - द्वितीयः प्रथमम् । मन्द्रश्चतु-र्थमतिक्रम्य तृतीयम् । मन्द्रश्चतुर्थतृतीयावतिक्रम्यद्वितीयम् । तृतीयोद्वितीयमतिक्रम्यप्रथमम् । इति अष्टविधः । अयमारोहः ।

चतुर्विधोऽतिक्रामः । क्रुष्टः प्रथममतिक्रामति ऊ-२ । प्रथ-मोद्वितीयम् आरो३ह्वान् । तृतीयश्चतुर्थम् यज्ञा....य । प्रथमस्तृ

नतिक्रामति, ई-५ । अयमवरोहः । पंचविधंकर्षणमाद्वितीय मातृतीयमाचतुर्थमामन्द्रं मन्द्रश्चातिस्वार्यात् बोधा २ बोधा । आ- ३इन्द्रा । न्मा-भाइ । ओ—इडा । त्वं त्वा ५ मे । अयमप्य-वरोह एव । त्रिविधः स्वारः । प्रथमादिर्द्वितीयादिस्तृतीयादिरिति । अस्य संप्रसारणमिति संज्ञा । हरी....श्रीः - प्रथमोदाहरणं ई-५ आ-५ एवं स्वरितविनत प्रणतोत्स्वरिताभिगीतानां लक्षणं मात्राच कथ्यते । अन्ते प्रतिज्ञाखलु वर्तत इति ग्रन्थ समाप्तिः । अस्य कर्तावररुचिरिति ज्ञायते ।

## आर्चिकलक्षणम् ।

अयं श्लोकरूपेणवर्तते । आर्चिकानां स्वरनिर्णयः तेषा-मवान्तरभेदः स्वरसन्निवेशप्रकारः हस्तेन निर्देशप्रकारः इत्याद-योऽत्र प्रतिपाद्यन्ते । अयमारंभश्लोकः ।

उदात्तश्चानुदात्तश्च स्वरितः प्रचयस्तथा ।
बह्वृचांस्वर भेदाः स्युस्तद्युक्त्यार्चिकमुच्यते ॥

ऋचां चत्वारः स्वराः उदात्तानुदात्तस्वरित प्रचयसंज्ञकाः । उदात्तं व्यञ्जयति-1-अयमंकः । स्वरितं व्यञ्जयति-2-अयम् - अनुदात्तं व्यञ्जयति-3-अयम् । कुत्रचित्-2-अयमपि उदात्तं व्यञ्जयति । अंगुष्ठेनउदात्तं, तर्जनीमध्यरेखया स्वरितं

प्रचयं कुत्रचिदुदात्तं च प्रदर्शयेत् । मध्यमा मध्यरेखया अनुदात्तंच निर्दिशेत् । स्वरितात्परः प्रचयस्वरः ।

उदात्तस्वरः अनुदात्तात्परः पूर्वोवास्यात् । अनुदात्तयोर्मध्ये उदात्तस्वरे अनेकाक्षराणि चेत् तत् शिवकोदात्तसञ्ज्ञं स्यात् । सनः पवस्वशं गव इति । मध्यमांगुलिं संकोच्यनिर्दिशेत् ।

"संकोच्यमध्यमां किंचिदुदात्तेतर्जनीं स्पृशेत्" इत्युक्तम् । उदात्तस्थानेकाक्षरात्परं यत् स्वरितं तत् स्वारसंज्ञं; गणनामर्हति छलाक्षराय । तस्य हस्त संन्निवेशप्रकारः कथ्यते ।

ततः "आवाजं वाज्यमेतत्तु जात्यादेः स्वारदाहृदि" । इतोन्यो योविशेषः स्यात् सन्नियम्ययथामति ।

इति समाप्यते ।। "छलाक्षराणि" आर्चिक छलाक्षरम्

छलाक्षराणि अक्षरप्रदर्शनव्याजेन तत्रत्यस्वरादीनां सूचकानि । यथा अग्ने वेखाथे - इत्यादि । अस्यविवरणमेवम् । पूर्वस्यां ऋचि उदाहरणम् । स्वरितोदात्तधारीणां परिज्ञानमनेन भवति । यथा उदात्तात्परःस्वरितः2 द्विसंख्यया ज्ञाप्योभवति । तत्र अनुदात्तात्परः स्वरितोत्तरः अनेकोदात्तः यत्र, तत्र स्वरितस्यगणना भवति "अनुदात्तात्परोऽनेक उदात्तः स्वरितोत्तरः । संजगुःस्वारसंजंतं सैव वामेन निर्दिशेत् । एनाविश्वानिसंग्राह्यमुदाहरणमुत्तमम्" अनुदात्तयोर्मध्येऽनेकोदात्तःयत्रतत्रोदात्त-

ग्रहणम्

मध्येऽनुदात्तयोःस्यातामुदात्तौ प्रथमंतयोः ।

उत्कलाः कोशमित्याहुः उदात्तं संप्रदायिनः ॥

संकोच्यमध्यमांकिंचिदुदात्तेतर्जनींस्पृशेत् । यादृशाक्षरेषु स्वरांकोनास्ति पूर्वाक्षरस्वरेणैवैषामपिस्वरः तादृशान्यक्षराणि धारीत्युच्यन्ते ।

अत्र पूर्वोक्तस्वरिताक्षरगणनेन यत्संख्या भवति तत्र पंचशो विभागे शिष्टं यद्येकं तदा-क.इति. यदिद्वे, तदा-च-इति-यदि त्रीणि, तदा ट-इति-यदिचत्वारि, तदा-त-इति, यदि पंच तदा - प-इतिजानीयात् ॥

तथा उदात्तान् परिगणय्य पंचशोविभागे शिष्टं यद्येकं तदा स्वरिताक्षरस्य प्रथमं यदि द्वितीयं तदा (वर्गद्वितीयम्) यदि तृतीयं तदा वर्गतृतीयं, इत्यादि वर्गाक्षरं जानीयात् ।

तथा धारीणां परिगणने दशशोविभज्य शिष्टंयद्येकं तदा उदात्ताक्षर प्रथमं-क-प्रथमस्वरविशिष्टं जानीयात् । यदिद्वे, तदा - का-द्वितीयस्वरविशिष्टं, एवं. क,का, कि,की, कु,कू, के,कै, को - कौ. इति क्रमेण जानीयात् । पूर्वोक्तरीत्या परिगणने "नमस्ते अग्न ओजसे" इति द्वितीयखण्डस्य स्वरितानिपट् - उदात्तेद्वे - धार्यः द्वापंचाशत्-स्वरितस्य शिष्टं एकं. क.इति. उदात्तस्य-द्वे. ख. इति. धार्याः द्वे-तदा-खा-इत्येतदक्षरं निर्देश्यं स्यात् । तथैव मुद्रितपुस्तकेषु दृश्यते ।

यदि कस्मिंश्चित् खण्डे उदात्तमेव नास्ति तदा स्वरितं परिगणय्य-शिष्टम्-ह-य-र-ल-व-इत्येतदक्षरैः यथा संख्यं एक द्वि, त्रि, चतुष्पंच, संख्याभिर्जानीयात्। एतत्परि ज्ञानाय "अग्ने नमस्तेऽग्निवो - इत्यारभ्यार्चिकखण्डान् परिगणय्य तत्र यथा संख्यं" 'अग्नेवेखाथे' इति प्रपाठकानां छलाक्षराणि सम्यक् बोधयति छलाक्षराख्योऽयं ग्रन्थः ॥

॥ पदछलाक्षरम् ॥

आर्चिकवत् पदपाठस्यापि छलाक्षरं विद्यते। आर्चिके यत् स्वरितं तत्स्थाने अत्र आद्युदात्तम्। उदात्तस्थाने अवग्रहम्। धारीस्थाने पदं च गणनीयम्। आद्युदात्तंच अग्ने - इत्यत्र-20 एतादृशांकं विद्यते, एतदेवगणनीयम्। अवग्रहं नाम वेष्टन-पदं। हव्य दातये। हव्य—दातये इति। पदमिति सर्व पदानांग्रहणम्। आद्युदात्तावग्रहयोः पंचशः पदानां दशशः विभागः करणीयः। अग्न आयाहि इति प्रथमेखण्डे आद्यु-दात्तानि-33-। अत्र-त्रीणि शिष्यन्ते पंचशो विभागे। त्रिसंख्यायाः-ट-एतदक्षरम्। अवग्रहः-9-अत्र पंचशोविभागे चत्वारि शिष्यन्ते-अत्र चतुस्संख्यायाः पूर्वाक्षरवर्गे चतुर्थाक्षरग्रहणम्। पदानि-121-अत्र दशशो विभागे एकमवशिष्यते-तस्य-ढ-इत्येव-ग्रहणम् प्रथमखण्ड पदपाठस्य छलाक्षरं-ढ-इति। एतदेव-

अग्ने-ढ-ढो-टे णीज्ञौ-इत्यारभ्य स्तोभपदपाठपर्यन्तं छलाक्षराणि ज्ञापयति-छलाक्षरग्रंथः ॥ अवग्रहाभावे आर्चिकेउदात्ता भावेयथा हकारादिगणनं तद्वत् । उतरार्चिक पदपाठस्यापि एवमेव छलाक्षराणिविद्यन्ते । यथा उपास्मैगायत-अस्य पदपाठे आद्युदात्तम्-12-अवग्रहः-1-पदानि 32 छलाक्षरम् चा-इति पूर्वोक्तरीत्याज्ञातव्यम् । पूर्वस्यामृचि यथा छलाक्षरलक्षणमुक्तम् तथैवोत्तरस्यामृचि उत्तरार्चिक छलाक्षरम् ज्ञेयम् । तत्र प्रथमतः धारी-ततः उदात्तम् ततः स्वरितमिति क्रमेण गण नीयम् । उपद्विपव इत्यारभ्याऽऽन्तं छलाक्षरमुक्तम् । प्रथमाया-मृचि-ती-इति-द्वितीयायां-यि-इति पुस्तकेषु दृश्यते ।

॥ प्रकृति साम छलाक्षरम् ॥

प्रकृति साम्नि दीर्घाक्षराण्यादितोगणनीयानि तानि पंचशः विभज्यशिष्टं क-च-इति क्रमेण एकद्व्यादि संख्ययाऽर्चिकवत् जानीयात् । ततः पदानि परिगणय्य पंचशोविभज्य दीर्घाक्षरवर्गे प्रथमादि यथा संख्यं पूर्ववज्जानीयात् । अनन्तरं मात्रां गणयित्वा दशशोविभज्य पदेयदक्षरं गृहीतं तस्य स्वरविशिष्टस्य-क-का-कि-की-इति क्रमेण दशशोविभक्तस्य शिष्टंयत् तत्संख्यानुसारं गृह्णीयात् । आर्चिक छलाक्षरविवरणप्रसंगे विवृतमेतत् ।

अत्र दीर्घमित्यनेन द्विमात्रमक्षरं ० एतदंकविशिष्टंजानीयात् पदमित्यनेन तावत् सर्वाणिपदानि । मात्रा इत्यनेन अनुस्वारः

विसर्गः व्यञ्जनं केवलं स्वराः एतत्सर्वं गृहीतव्यम्। एतेषां प्रमाणवचनानि' कचटतपा येवर्गाः विज्ञेया ग्रहणेनते।

हयरल वा इत्युक्तो वर्गोयत्रनगृह्यते। वर्गाक्षरं पदैर्विद्यात् मात्रां विद्याद्विवृत्तिभिः। अनुस्वारोविसर्गश्च व्यञ्जनं स्वरवर्जितम्। स्वराश्च सर्वेकथिता विवृत्तय इति ध्रुवम्॥ विवृत्तयः-मात्राः। एताः पदारम्भेयदिस्युः तदा न गणनीयाः। आर्चिकपदपाठयोर-विद्यमानः कश्चित् विशेषः अत्र साम्नि वर्तते। साम्नि ऊनिधनं चेत् छलाक्षरे रेफः पूर्वं स्यात्। र्क इतिवत्। ई-निधनं चेत् रेफः परं क्र इतिवत्। साम्नि वृद्धोपाचेत् छलाक्षरेलकारः, मध्यो पाचेत् वकारः, दण्डोपाचेत् यकारश्च योजनीयः। क्ल-क्व-क्य-इतिवत्। एवं छलाक्षरोदाहरणम्। ओग्नाइ-अत्रसाम्नि दीर्घाः 7 पंचशोविभागे द्वे शिष्येते। तस्य, च इत्यक्षरम्। पदानि 9 पंचशोविभागे चत्वारिशिष्यन्ते। तस्य चवर्गचतुर्थं झ-इति। मात्राः 9 तस्य ओकारः-झ-इत्यनेन ओकारयोगे-झो-इतिस्यात्। ओग्नाइ साम्नि झो-इत्यक्षरंमुद्रितपुस्तकेऽस्ति इदं प्रकृति छलाक्षरं "अग्ने झो तू तू",-इत्यारभ्य तत्सवितुः क भारुण्ड कि इति शकर्यः इति समाप्यते।

ऊहरहस्ययोरपि प्रकृतिवत् छलाक्षराणि गणनीयानि, किंतु पदस्थाने उद्धं गणनीयम्। उद्धंनाम द्वितीयस्वरात् प्रथम-

स्वरंप्रति आरोहतया यद्गीयते तत्पदम्। एतादृशोद्घाभावे आर्चिके उदात्ताभावे यथा ह य र ल वा गृह्यन्ते तथैव। ऊह छलाक्षरं द्विविधं विद्यते। उच्चा न आमहीयवं पुनाबौटीरौरव यौधाजये इत्यारभ्य कश्चनग्रंथः। "आमन बौटी इत्यारभ्यापरो ग्रंथश्च प्रवर्तते। ऊहगानारंभसाम्नि, आमहीयवे दीर्घाणि 9 उद्घाः 5 मात्राः 21 अत्र पूर्वोक्तरीत्या परिगणने न, इत्यक्षरं स्यात्। तथैवपुस्तकेषु दृश्यते। एवं छलाक्षर परिज्ञानेन वेदगताक्षर स्वरमात्राविपर्यासदोषोनिवर्तयितुं शक्यते। अतः अवश्य ज्ञातव्यत्वादध्येतृभिः किंचिद्विस्तरशोऽभिहितम्।

॥ छलप्रक्रिया ॥

छलप्रक्रियानाम कश्चनग्रन्थः। तत्र पूर्वोक्त छलाक्षराणां परिज्ञानप्रकारः, निधनभेदेन छलाक्षभेदः प्रत्युन्क्रामाभिगीत कर्षणवस्तु, छलाक्षरवैलक्षण्यं, उद्घातलक्षणं, विवृति विवरणमित्यादयो विषयाः प्रतिपाद्यन्ते। श्लोक रूपोयं ग्रंथः द्वाविंशच्छ्लोकात्मकः।

"पंचविधाष्टविधयोः छलयोः कथ्यतेऽधुना।
संदेहमोचनीसाम्नां प्रक्रिया निधनस्यच" ॥ इत्यारभ्य

विधर्मसामचोत्तरं विवृत्या हीनमुच्यते।
पवस्वसोम संज्ञकं कमित्युदीरिताक्षरम्॥ इति समाप्यते।

॥ छलाक्षर कारिका ॥

छलाक्षर कारिकायां आर्चिके छलाक्षरपरिज्ञानाय यादृशसंकेताः प्रोक्ताः साम्नितादृशसंकेतात् अन्यः प्रकारः इति, आर्चिकगानयोः छलाक्षरपरिज्ञानप्रकारस्सम्यक् बोध्यते। इयंचाष्टश्लोकात्मिका,

दीर्घस्थानेतुस्वरितं पर्वस्थान उदात्तकम्।
मात्रास्थानेतु धारीस्यात् प्राकृती छललक्षणम्॥ इत्यारभ्य,

स्वरोविकारस्सर्वत्र पदादि वर्जमेव च।
पदान्ते च विसर्गश्च व्यञ्जनः स्थितसंधिताः॥

इति पूर्यते।

एतादृश छलाक्षराणि मन्त्रशास्त्रेऽपि वर्तन्ते। सामवेदे वेदान्तरापेक्षया स्वराणां बाहुल्यात्, छलाक्षर ग्रंथः आर्चिकपद गानानां पृथक् विद्यते॥

सामप्रकाशन(कम्)म्

सामप्रकाशनाख्यो ग्रंथः वेयगाने अरण्यगानेच अवश्य विज्ञेयानि, दुरूहानि, सूक्ष्माणि, अवधारणसाधनानि, बोधयति। गजवक्त्रचरण कमलं नत्वा साम प्रकाशनंग्रंथम्। रचयति [illegible] समूहात्, प्रीतिकरस्सारमुद्धृत्य। इत्यारंभः। वेयगाने

ऋग्वर्जितमेकमेवसाम संत्वाहिन्वेति । दीर्घपद मात्राणां पंचैव विद्यन्ते, यस्तेनूनमिति साम्नि। सप्तस्वरात्मकंसाम एकमेव मोषुत्वावा द्वितीयम् । तृचात्मकंसामएकमेव एषाहाउ इति । प्रथमद्वितीयस्वरमात्रयुतंसामद्वयं उपोषु, अर्षासोम आदिमम्, क्रुष्टस्वरयुतं सामत्रयं मोषुत्वावाद्वयं इन्द्र सुतेषुच । आदावन्तेच पुनरुक्तंपादं ऋक्त्रये । उपनो हरिभिः; मान इन्द्रपरावृणक् तरत्समन्दी। असंपूर्णार्चिकानि सामानि षट् । मानोहृणीथाद्वयम् । अग्नेत्वन्नोद्वितीयं चतुर्थंच। अयारुचा द्वयम् । अकारस्य ओकारः षट्सुसामसु । अग्न आयाहि, अग्निर्वृत्राणि । अग्निस्तिग्मेन, अग्नेत्वन्नो इत ऊती, पुरोजिती, । ऊकारनिधनानिसप्त सामानि, ईनिधनानि चतुर्विंशतिः, दण्डोपानिधनान्वितानिदशसामानि । मध्योपायुतानि पंचत्रिंशत् , आउवायुक्तं, वा औहोवायुक्तं, दीप्तायुक्तंचसाम, ऋचि ह्रस्वमक्षरं साम्नि दीर्घं भवति । तृतीयस्वरे चतुर्थस्वरेच धारी, धारीनाम पूर्वाक्षरस्वरेणैव स्वरवत्वं। एतेषां उदाहरणानि सम्यङ्निर्दिष्टानि । स्तोभरहितानि सामानि चत्वारिंशत् । आदिच्छेकः त्रयस्त्रिंशत् । यथाऽरंभेगानं तथैवोत्तरत्रापि । यथा अश्वन्नत्वा द्वितीयं, शंनो देवीद्वितीयम् इत्यादि। एवंवेयगाने प्रतिपाद्य अरण्ये गेयेऽपि कथ्यते ।

अत्र सप्तस्वरात्मकं साम एकं। काह्वह्व। आर्चिकपाठे स्तोभपद पाठेच अन धीतम्-आक्रन्दय इति एकं ऋक्पद पूर्वकं गीयतेऽरण्ये। त्रिस्वरान्तरितस्वरं अश्विनोर्व्रतपूर्वे। ऊकारनिधनं प्रोक्तं पंचैवारण्यसामसु। ऋग्युग्मेन समन्विता निषट् अतीषंगाद्याः। द्विस्वराणि अष्टौ सुबस्संसर्प अग्निमीडे, अग्निरस्मि, इत्यादि। तृचात्मकानिसामानि नव, शाक्करं, यण्वं, अपत्यं, परिधिसामानि षट्। दीप्तायुक्तानिएकादश। या औहोवा, वा औहोवा, युक्तंसाम। हम्र्. अम्र्-इतिनिधनयुतानि सामानि। आदिच्छेकस्त्रयोविंशतिः। ऋग्वर्जितानि स्तोभमात्रेणगीयन्ते सप्त त्रिंशत् सामानि। पतिर्दिवः, इत्यादीनि। ईकारनिधनानि चतुःपंचाशत्। उहुवा हाउ वा, इति युतानिषट्॥

अथोहगीतीनांतृतीय चतुर्थयोर्यदक्षरं तद्धार्यमुच्यते, इत्यारभ्य, ऊहगाने धारीकथ्यते। अध्येतॄणां संशयनिराकरणार्थं। तरोलेपेतेमा अयंदासेइन्द्रगो। अभीवर्ते सर्वत्राधार्यः। इति चतुर्थधारी। अथ तृतीयधारीण अभिश्यैतेप्रस्ने-इत्यादि। अभीवर्ते सर्वत्र तस्मान् गोवर्जम्। इतिपूर्यते॥

मात्रालक्षणावग्रह हितवाक्यार्चिकलक्षणछलप्रक्रियादीनि मुद्रितानि ग्रन्थाक्षरेण श्रीकृष्णस्वामि श्रौति महानुभावैः।

रावणभेट् इति सर्ववेदलक्षणग्रंथः अस्ति। तत्र सामवेदे ओं कनक, ततुकंनरः। आने दिग्नं, गम्स;[7] नमोरस नेत्र अरः 52 - अग्निग्रह द्रूमासः 52 यज्ञाधा[9] पावक त्यगीतिः। एनाथि चै क सप्ततिः। देवो रुद्रानयन मासः 57 - इत्यारभ्य एवा ह्येव यदिन्द्र जज्ञानश्चन्द्रमा अपि। अया सो मेति चैतेषु पदमात्रं प्रतिष्ठते। आद्युदात्तावग्रहौ नस्तः तेष्वृक्षु-इत्यर्थः। पूर्वं ऋक्पदस्य खण्डं प्रति रावण भेट् समाप्तः। इति समाप्यते। अस्यव्याख्यानोपलभ्यते। छलाक्षरविशेष इतिप्रतिभाति, मद्रास्र सर्वकलाशालायां एवंदृष्टम्॥

"पाणिनीयशिक्षा"

पाणिनीयशिक्षायास्साधारण्येऽपि सामवेद लक्षणेष्व-न्यतममिति प्रस्तूयतेऽत्र। आरम्भेऽत्र अचांव्यञ्जनानां व्यवस्था क्रियते। अक्षराणां बुद्धिमनस्संयोगेन आविर्भावः मन्द्र मध्य तार स्थायि तथस्य उत्पत्तिस्थानं उदात्तादिस्वरेभ्यः निषादादयः उत्पद्यन्ते, अक्षराणां उच्चारण हेतुभूतानिस्थानानि अष्टौ, अक्षरोच्चारणप्रकारः यथा व्याघ्री स्वापत्यस्य नयनानयन काले स्वदंष्ट्राभिः नात्यन्त काठिन्यमार्दवाभ्यां संगृह्य नयति तथोच्चारणं कर्तव्यमिति ज्ञापनं, वेदपाठकानां षड्गुणाः दोषाश्चेति कथनं, वेदपुरुषस्य छन्दः पादौ, कल्पसूत्राणिहस्तौ, ज्योतिश्शास्त्रं

नेत्रं, निरुक्तं श्रोत्रं, शिक्षाघ्राणं, व्याकरणम् मुखम् उदात्तादयः हस्तरेखासु हस्तविन्यासेन दर्शनीयाः, अन्यथादोषः । वेद-पारायणेन पापानि नश्यन्ति पुण्यानिवर्धन्त इत्यादयो नैकविषयाः प्रदर्श्यन्ते ।

"अथशिक्षां प्रवक्ष्यामि पाणिनीयं मतंयथा ।

शास्त्रानुपूर्वं तद्विद्यात् यथोक्तं लोकवेदयोः । इत्यारभ्य त्रिणयनमभिमुखनिस्सृतामिमां यइहपठेत्प्रयतश्चसदाद्विजः । सभवति धनधान्यपशुपुत्र कीर्तिमान् अतुलं च सुखं समश्नुते दिवीति इति समाप्यते । एकोनषष्टिश्लोकास्सन्ति ॥

॥ नारदशिक्षा ॥

नारदेन प्रणीतत्वादस्य नारदशिक्षेति नाम । इयं तावत् ऋचस्साम्नश्च लक्षणम् । भट्टशोभाकरोऽस्या व्याख्याता । प्रपाठकद्वयं षोडशखण्डाः चत्वारिंशदुत्तर द्विशतग्रन्थाश्चात्रसन्ति ।

॥ प्रथमे प्रपाठके ॥

अथातः स्वर शास्त्राणां सर्वेषां वेदनिश्चयम् ।

उच्च नीच विशेषाद्धि स्वरान्यत्वं प्रपद्यते ॥ इत्यारंभः ।

स्वरस्त्रिविधः, आर्चिकसामिक गाथिकभेदात् । स्वरादि-वैगुण्ये विपरीतफलस्य श्रुतत्वात् तत्र अवधानमावश्यकम् ।

मन्द्र मध्यमयताराणां स्थानभेदः । कुत्र कानि व्यज्यन्ते ? ऋग्वेदे कीदृशः, आह्वारकाः स्वराः के ? छन्दोगवाजसनेयिनोः ब्राह्मणस्वरः । ताण्डिभाल्लविनांस्वराः, एते प्रतिपाद्यन्ते प्रथमेखण्डे । सप्तस्वराः, त्रयोग्रामाः एकविंशतिर्मूर्च्छनाः । तेषां विवरणम् । मूर्छनानां नामानि उत्पत्तिः षड्जा दिनाकेषांप्रीतिः इत्यादयो द्वितीये । रक्तं पूर्णमित्यादयो गान गुणा दश, तेषां लक्षणानि । गानदोषाश्चतुर्दश । तेषां लक्षणा निच तृतीये । षड्जादीनां स्वराणां वर्णः पद्मपत्रनिभष्षड्जः, इत्यादिनास्वरसन्निवेशेन सामगानमनन्तप्रभेदं भवति, तथाग्राम भेदोऽपिइत्यादयो विशेषाश्चतुर्थे । वैदिकलौकिकगानयोः स्वर-वैलक्षण्यम्, " यस्सामगानांप्रथमस्सवेणोर्मध्यमः स्वरः इत्यादिना । षड्जादीनां मयूरादि प्राणि ध्वनिना परिज्ञानं भवतीति, षड्जादीनां उरआदिस्थान विशेषादुत्पत्तिः, षड्जा-दीनां अग्न्यादिदेवताकत्वचिन्तनमावश्यकं, गान्धारादिस्वर-श्रवणेन गवादीनांप्रीतिर्भवति, निषादादिशब्दनिर्वचनं च क्रियते पंचमे । गानसाधनं वीणाद्वयं तत्रदारुमयीवीणा लौकिक गानस्य, शरीरमेव वीणा वैदिकस्य । हस्तसन्निवेश प्रकारः । प्रणवव्याहृतिसावित्र्यनुवचनपूर्वकस्वाध्यायाभ्यासः, अंगुल्या स्वरनिर्देशः मात्रागणनंलय्येन, शरीरचेष्टाराहित्येनगानम्

हस्तसन्निवेशमुखोच्चारणयोस्सम कालिकत्वम् । स्वरच्युतौ दोषः द्रुत मध्यम विलम्बित भेदेनवृत्तिस्त्रिविधा । तस्य उपयोग कालः, एवंशिक्षाशिक्षितएवाध्यापयितुंशक्तइत्यादि षष्ठे प्रतिपाद्यते । क्रुष्टादि स्वराणां मूर्धादिस्थानादुत्पत्तिः, अङ्गुष्ठाद्यंगुलि विशेषेणस्वरसन्निवेशप्रकारः, देवमानुषपशुगन्धर्वादयः सप्त, क्रुष्टाद्यैस्स्वरैरुपजीव्यन्त इत्यादिः, दीप्ताऽऽयताकरुणानां ज्ञापनायाऽङ्गुलिसन्निवेशप्रकारः, तेषां उच्चनीचत्वादिविशेषश्च प्रतिपाद्यतेसप्तमे ।

अष्टमे, आर्चिकस्वरत्रयं, स्वरितप्रचययोस्स्वरूपं, स्वरितस्य साप्तविद्ध्यं, वैस्वर्यलक्षणमित्यादयःप्रतिपाद्यन्ते । सप्तविध स्वरितस्यपृथग्लक्षणं, कम्पलक्षणंचोच्यते नवमे । ह्रस्वदीर्घ भेदेन कम्पोद्विविधः, शिवकोदात्तलक्षणं, व्यञ्जनानां द्वित्वविधिः, तस्यापवादः, यमाख्यस्वर्णविशेषस्य लक्षणं, अनुस्वारोपध्मामूलीयानां लक्षणं, तेषां पूर्वांगत्वपरांगत्वनिर्णयः इत्यादयो विचार्यन्ते दशमे ।

पदकाले उदात्तादीनां स्वरान्तरत्वप्राप्तिः, मात्राद्विमात्रादीनां, कालनिर्णयः, प्राणिध्वनिसादृश्येन, अवग्रहलक्षणमित्यादयः प्रतिपाद्यन्ते एकादशे । चतसृणांविवृत्तीनां लक्षणं, तासां मात्राकालः, अनुस्वारलक्षणं, रंगलक्षणं, रंगोच्चारण-

प्रकारः, इत्यादयोद्वादशेनिरूप्यन्ते । स्वराणामुदात्तादीनां स्वरानुवर्तित्वं, न व्यञ्जनानुवर्तित्वम् । अष्टविधागतिः, सन्ध्यलक्षणं, तस्यविकारः इत्यादिः त्रयोदशे । स्वरभक्तिलक्षण-मुच्यते चतुर्दशे ।

पथ्यालक्षणं, पदपाठे आद्युदात्ताद्यष्टविधस्वरलक्षणं, पंचविधमाचार्यलक्षणं, तत्र प्रतिज्ञायाः प्राबल्यं, स्वरसौक्ष्म्यस्य तुम्बुरुनारदादिभिरप्यविज्ञेयत्वमुक्तं पंचदशे । गानप्रागल्भ्याय शरीरारोग्यसाधनं, अभ्यव्यवहारादिकं, प्राणोपरोधस्वरो-नोपयोक्तव्यः, सदाचार्यादभ्यासः, वेदोच्चारणसमये मुखसन्नि-वेशप्रकारः, विद्यादाने अपात्रनिरूपणं, शनैर्विद्याग्रहणं, वेदा-भ्यासेन दिनस्यावन्ध्यत्वकरणं, विद्यार्थिभिरभ्यसनीयागुणवि-शेषाः, गुरुशुश्रूषाया आवश्यकत्वंच प्रतिपाद्यते अन्तिमे । एवं वर्णाः प्रयोक्तव्याः नाव्यक्ता न च पीडिताः । सम्यक् वर्णप्रयोगेण ब्रह्मलोके महीयते" इति समाप्यते । भट्टशोभा-करकृतव्याख्यानस्य, प्रकाशाख्या टिप्पणी काचित् श्रीनारायण-स्वामिदीक्षितेन विरचिता विलसति ।

"गौतमशिक्षा"

गौतमशिक्षायां, अक्षराणां संयोगे कीदृशोविकारः कतिव्यञ्ज-नानि एकस्मिन् अक्षरेसंयोक्तुं शक्यन्ते इत्याद्योविचार्यन्ते ।

इयं गौतममहर्षिणा रचिता । अस्यास्संयोग शृङ्खलेति नामान्तरमप्यस्ति । अत्र द्वेप्रपाठके षोडशखण्डाश्च सन्ति ।

अथ त्रयस्त्रिंशद्व्यञ्जनानि "इत्यारंभः । व्यंजनानि त्रयंस्त्रिशत् । कादयः मावसानाः स्पर्शाः । यकारादीनि चत्वारि अन्तस्थाः । शकारादीनि चत्वारि ऊष्माणः । एतेषां एकत्रयोगे संयुक्ताक्षरं भवति तत्र प्रथमस्य द्वित्वं भवति । यथा अग्न आयाहीत्यत्र गकारस्यद्वित्वम् । वर्गद्वितीय चतुर्थाक्षराणां रेफहकारयोश्च द्वित्वं नास्ति । वर्गद्वितीयस्य द्वित्वस्थले पूर्वं वर्गप्रथमाक्षरं, चतुर्थस्य तृतीयाक्षरंच क्रमेण श्रूयते । यथा वेत्थाहि, भरामेद्धमम्, इत्यादौ । रेफहकारयोः परमक्षरं द्विर्भवति । अर्क्कोदेवानां, ब्रह्मजज्ञानं, इत्यादौ, अथद्व्यक्षरयोस्संयोगः ।

शन्नोदेवीः, उन्नयामि, अत्र यथा संख्यम्, न्-न्-ओ, न्-न्-अ, इति नकारद्वययोगः । त्र्यक्षरयोगः, आक्रन्दय - न्-न्-द् अ, नकारद्वयं दकारश्च ।

चतुरक्षराणां । अग्न आयाहि, ग्-ग्-यम, न्. अ । अत्र गकारद्वयं नकारः, गकारतकारयोर्मध्ये यमइत्यक्षरमेकं विद्यते । तच्चनिस्वरूपम् । अशरीरंयमंविद्यात्, इत्युक्तेः । अनन्त्यान्त्य संयोगे मध्ये यमो नाम कश्चिद्वर्णविषयः अस्तीति

ज्ञेयम् । अत्र गकारः अनन्त्यः नकारः अन्त्यः, तयोर्योगे मध्येयमो वर्तते वर्णक्रमोच्चारणसमये तस्य विवरणं भवेत् ।

पंचाक्षराणां, विश्वप्स्न्या । प्-प्-स्-न्-य्- आ । एवं अग्नेयुङ्क्ष्व ङ् ङ्-क्-ष्-व्- अ ।

षडक्षराणमुदाहरणम् सत्र कात्स्न्यां । र्-त्-त् स्-न्-य्- आ एवंसप्ताक्षराणामपि उदाहरणं शाखान्तरे दृश्यते । इत्थमक्षरपरिज्ञानात् सुष्ठु प्रयोगो भवति । संयुक्ताक्षराणि त्रिधाविभक्तानि, अयस्पिण्डः । दारुपिण्डः । ऊर्णापिण्ड इति । यमयुक्तः अयस्पिण्डः । अन्तस्थायुक्तः दारुपिण्डः । यमान्तस्थारहितः ऊर्णापिण्डः । एवं निरूप्य

"एषा सहस्रवर्त्मात्मा नाना वृत्तिविभूषिता ।
संयोग शृङ्खलानाम सामवेदनिबन्धनात् ॥

इति समाप्यते । अस्य व्याख्या नोपलभ्यते ।

॥ लोमशशिक्षा ॥

लोमशिन्यां प्रवक्ष्यामि गर्गाचार्येण चिन्तिताम् । साभिधानां यथोक्तांतु आचार्य वचनंयथा ॥ इत्यारभ्य अष्टखण्डात्मिकैषाशिक्षा प्रवर्तते । अत्र स्वरविशेषाः तेषां उच्चारणप्रकाराश्च कथ्यन्ते । ह्रस्व दीर्घवृद्धाभिगीतादय स्वराः मृदंगवत् श्रूयंते, कंपस्य निर्वचनं, दीर्घकंपेह्रस्वकंपेच उच्चनीचयोः

मात्राविधिः, रंगो द्विविधः, स्वरपरो व्यञ्जन परश्चेति, तस्यमात्रा कालः, अनुनासिकोच्चारणप्रकारः, अक्षराणां द्विर्भावः, तत्र पूर्वांगत्वपरांगत्वविधिः, स्वारलक्षणम् पदपाठे, आद्यु-दात्तान्तोदात्तमध्योदात्तादयः स्वरविशेषाः, बहवः प्राणापान-साम्नोः उच्छ्वासनिश्वासप्रकारः, अणुमात्रादीनां स्थाननिर्देशः, मात्रादीनां चाषादिध्वनिसमानता, इत्यादि विचार्य ॥

"शून्यगृहे पिशाचस्तु गर्जते नच दृश्यते ।
एवं यकारावक्तव्याधियश्निर्जर्मे निदर्नम् ॥

इति समाप्यते ॥

॥ गीतिकल्पम् ॥

गीतिकल्पं, अथवा गीतिकल्पपरिशिष्टं, इति कश्चनग्रन्थः वर्तते । अत्र ऊहसाम्नां प्रतिसाम प्रस्तावभक्तिः कथ्यते । चतुश्चत्वारिंशत्खण्डास्सन्त्यत्र । फुल्लसूत्रान्तिमेखण्डद्वये प्रस्ता-वभक्तिरुक्ता । तथापि अत्र तदपेक्षया विशदतया प्रस्ता वपरिज्ञानं भवतीति विशेषः । अपिच उहगानस्यसाम्नां योनिभूतप्रकृतिसाम्नां बृहद्भारद्वाजादीनां महानाम्न्यन्तानां प्रति-साम प्रस्तावः प्रस्तूयते । अथोहगीत साम्नां योनिगानान्यनु-क्रमिष्यामः प्रस्तावलक्षणैस्साकम् इत्यारभ्य ॥

प्रस्तोतुर्मोह नाशाय गीत्याख्यं बोधसिद्धये ।
चकाररामशुक्लाख्योगीति कल्पं सलक्षणम् ॥ इतिपूर्भते ।

॥ ऊहसामानुक्रमणिका ॥

ऊह सामानि षट्त्रिंशच्छतानि नवसंख्यया ।
तेषु द्वे द्वे भवन्त्याश्व नामें धाक्षारनानदम् ॥

वैतहव्योत्तरक्रौञ्च सोमसामाद्यदंष्ट्रकम् ।
कक्षमौक्षप्लवक्रोश शौक्तच्यावनशैशवम् ॥

पौरुमद्गयतस्तोभ गौतमे वार्शशाकले ।
वसिष्ठस्य प्रियं वात्सप्रोत्तरत्रैतवाजजित् ॥

आश्वेविपश्चितोऽभिद्रो नामेंधेतु अधाहिच ।
इन्द्रंविश्वाऽथाक्षारं पवतेहर्यमच्छसु ॥

नानदेतु पुरःप्रत्यतहव्ये पान्तमापुरो ।
क्रौंचोत्तरेपुरः पूषासोमसामविपश्चितः ॥

सुता इन्द्रायदंष्ट्राद्ये आत्वावीन्द्रस्य थप्तत्रौ ॥ इति ॥

अस्यविवरणमेवं क्रियते । एवं श्लोकात्मकतया वर्तते । ऊहसाम्नां एकनामधेयानि सामानि कुत्र कानि कियन्ति इत्यादि विचारः क्रियते । अत्र त्रिंशदुत्तर शतश्लोकाविद्यन्ते । न मुद्रापितम् ॥

॥ गृह्यसूत्रम् ॥

श्रौतकर्म बोधकानि श्रौतसूत्राण्यधिकृत्य विचारः पूर्वं कृतः । इदानीं गृह्यसूत्रमधिकृत्यप्रस्तावः क्रियते । आश्वलायनापस्तंबबोधायनादीनां यथा गृह्यसूत्राणिविद्यन्ते तथा द्राह्यायण

सूत्रानुसारिणां गृह्य सूत्रं विद्यते । गृह्याग्निः औपासनाग्निः, "यस्मिन्नग्नौपाणिं गृहीयात् सगृह्यः" इति विवाहादारभ्य उपास्यमानस्य गृह्यत्वाभिधानात् । तत्रक्रियमाणानि कर्माणि गृह्यकर्माणि । तद्बोधकमिदं गृह्य सूत्रम् । उपलक्षणतया अग्नि-साध्यानि तदसाध्यानि च कर्माणि गृह्यन्ते ।

आश्वलायनादि सूत्रेषु, श्रौतसूत्रं, धर्मसूत्रं च एकेनैव ऋषिणा कृतमिति ज्ञायते । द्राह्यायणसूत्रेतु श्रौतसूत्रकारः द्राह्यायणः, गृह्यसूत्रकारः खादिर इति, भिन्नः कर्तेति ज्ञायते । खादिरस्य प्रसिद्धिः न कुत्रापि ज्ञायते । वंशब्राह्मणेऽपि बहवो महर्षयः प्रोक्ताः, न तत्र खादिरो गृह्यते । अतः द्राह्यायणस्यैव खादिर इति नामान्तरं स्यादिति अनुमातुं शक्यते । श्रौतगृह्यसूत्रयोः परामर्शे तत्र लिंगं ज्ञायते । "एवमयज्ञे कुरेतेति यज्ञे" (४-४-२२-२३ गृ-सू) "तूष्णीमयज्ञे दक्षिणा इति धानञ्जय्यः" भूर्भुवस्स्वरोमिति गौतमः ओमिति वा (५-४-श्रौ-सू) अत्रो-भयत्रापि अयज्ञशब्देन गृह्यकर्मग्रहणमेकं लिंगम् ।

"पाकयज्ञ इत्याख्यायःकश्चैकाग्नौ" (गृ-सू-१-१-१७) "पाकयज्ञ इत्याचक्षते एकाग्नौयज्ञान्" (१२-१-४-श्रौ-सू) अत्र गृह्याग्निसाध्यकर्मणां उभयत्रापि सूत्रे पाकयज्ञशब्देनव्यवाहारः इति अपरं लिंगम् ।

एवं लिंगान्तराण्यपि दृश्यन्ते । अतः श्रौतगृह्यसूत्रयोः एकः कर्तेति अनुमीते ।

श्रुतिंपश्यन्ति मुनयः स्मरन्ति च तथास्मृतिम् ।
युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरेतपसापूर्वं अनुज्ञाताः स्वयं भुवा ॥

इति वेदोक्तानां सूक्ष्माणां धर्माणां द्विजैः कर्तव्यत्वेन-विहितानां बोधकानि गृह्यसूत्राणि स्मृतित्वेनप्रमाणानि ।

अत्र, द्विजैरवश्यमनुष्ठेयेषु चत्वारिंशत्संस्कारेषु षड्विंश-तिःसंस्काराः विहिताः। चत्वारिंशत्संस्काराः धर्मसूत्रविवरणसमये प्रकाशयिष्यन्ते ।

गृह्यसूत्रे, चत्वारः पटलाः, एकोनविंशतिः खण्डाश्च विद्यन्ते । अस्य वृत्तिकारः रुद्रस्कन्द इति ज्ञायते ।

॥ प्रथमः पटलः ॥

गृह्यकर्मणामुदगयनादिः कालः । यज्ञोपवीतलक्षणं । तद्धारणप्रकारः । आचमनविधिः । मन्त्रस्वरूपपरिज्ञानोपायः । ब्रह्मणः उपवेशनप्रकारः । तस्यमौनविधिः, अकरणे प्राय-श्चित्तम् । स्वयं ब्रह्मत्वविधिः । उल्लेखलक्षणं । आज्यसंस्कारः । अग्निपरिषेचनमित्यादयः होमेषु साधारण धर्माः । अनन्तरं

गुरुदक्षिणादानपूर्वकं विवाह करणम् । तत्राप्लुवनम् । उदकुम्भ धारकस्य नियमः । वस्त्राच्छादनम् । होमविधिः ।

लाजहोमः । सप्तपदी । पाणिग्रहणम् । ततः दम्पत्योर्नियमः । लेखाहोमः । ध्रुवदर्शनम् । गुर्वभिवादनम् । मधुपर्क प्रदानम् । चतुर्थेऽहनि चतुर्थीहोमः । ऋतुसमावेशनम् । औपासनारंभः । अस्य प्रकारः । वैश्वदेवप्रयोगः इत्यादयो विधीयन्ते ॥

॥ द्वितीयतृतीयपटलयोः ॥

दर्शपूर्णमासारंभः । चरुतन्त्रप्रकृतिभूत दर्शपूर्णमासस्थालीपाक प्रयोगः । पुंसवनसीमन्तोन्नयनप्रयोगः । सोष्यन्तीहोम, जातकर्म, चन्द्रदर्शन नामकरण विप्रोष्यकर्म, चौलोपनयनानि । तेषांकालः । ब्रह्मोपदेश प्रकारः । भिक्षाटनम् । गोदानादिव्रतानि । ब्रह्मचर्य नियमः । नियमलोपप्रायश्चित्तम् । समावर्तन प्रयोगः । स्नातकधर्माः । गोपुष्टिकामस्य प्रयोगः । सर्पबलि प्रयोगः । उपाकर्मकालः । तस्य प्रयोगः । अनध्ययनानि । आश्वयुजी । नव व्रीहिसाध्याग्रयणम् । नवान्नप्राशनविधिः । त्रिस्रोष्टकाः । मध्यमाष्टकाप्रयोगःपशुतन्त्राणांप्रकृतिः । अन्वष्टक्य प्रयोगः । पिण्डदानविधिः । चैत्री । एतानि प्रतिपाद्यन्ते ।

## ॥ चतुर्थः पटलः ॥

काम्यकर्मणां आरम्भे षट् कालाः काल त्रयंवोपवासः। नित्यानामेवं। नैमित्तिकानां पश्चादुपवासः। ब्रह्मवर्चसकामपशु कामयोः प्रयोगः। पशुस्वस्त्ययन स्नेहादिकामानां प्रयोगः। अनकाम मरणकामस्य जपः। अलक्ष्मीनिर्णोद्प्रयोगः। सन्ध्योपस्थानम्। आचितशतवृद्धि कामप्रयोगः। वास्तु निर्माण प्रदेशः वास्तु द्वारनियमः। तत्फलम्। वास्तु होमप्रयोगः। वशीकरण प्रयोगः, शत्रुवधार्थप्रयोगः। ग्रामकामादि प्रयोगाः, अत्र चतुर्थे पटले दृष्टार्थाः प्रयोगविशेषाः बहवोविधीयन्ते।

तथाहि पशुलाभार्थं, पशु क्षेमार्थं, केनचित् स्नेहार्थं, भूमि, अर्थ, अश्व, अज, संग्रहार्थं, संपादितस्वद्रव्यस्याधिक-वृद्ध्यर्थं, प्रोषितस्य सुखेन प्रतिनि वृत्यर्थं, अलक्ष्मी निर्हरणार्थं, मार्गेभयनिवृत्यर्थं, यशोऽभिवृद्ध्यर्थं, गृहनिर्माणस्थल, वास्तुहोम प्रयोगादिकं च, वशीकरणोपाय, शत्रु वधार्थ पशु व्याधिशमन, वृत्यविच्छेद, स्वापकालेऽभय, विषनिवृत्यर्थ प्रयोगाः अन्तेमधु-पर्कप्रयोगश्च विशदतया कथ्यते। गृह्यसूत्रमिदं रुद्रस्कन्द वृत्ति-सहितं श्रीलक्ष्मण श्रौतिभिः पंचनदक्षेत्रे ग्रन्थाक्षरेण पुना अनन्दाश्रममुद्रणालये, महीसुरपुरस्थविश्वविद्यालये नागरा क्षरेण च मुद्रितम्। सूत्राणि, वृत्तेर्द्राविडभाषाविवरणेन साकं

दशवर्षेभ्यः प्राक् ग्रन्थाक्षरमयानि मुद्रापितानि मया । आनन्द-ताण्डवपुरं श्रीपट्टाभिरामार्यैस्सूत्रार्थबोधिनीति सूत्रव्याख्या कृता मुद्रिता च ।

॥ गौतम धर्म सूत्रम् ॥

तत्तत्सूत्रीयाणां प्रातिस्विक तत्तत्कर्मावबोधकानि गृह्य सूत्राणियथा तथा बौधायनादीनि धर्मसूत्राणि प्रायशः सर्व सूत्राणांसाधारण धर्मबोधकानिविद्यन्ते । तेष्वन्यतमं गौतम धर्म सूत्रम् । इदं, धर्मसूत्रान्तरेऽविद्यामानान् कांश्चन धर्मान् बोधयति स्फुटीकरिष्यन्ते पश्चात् । प्रायशस्साधारण्येऽपि गौतमधर्मसूत्रं सामवेदिनामसाधारणान् धर्मान् बोधयति । यथा उपाकर्म कालः, वैश्वदेवकर्मेत्यादिकम् । सामवेदिनां सन्ध्या ब्रह्मयज्ञ श्राद्धादि कर्मावबोधिका गौतममहर्षिप्रणीता श्लोकात्मिका काच-नस्मृतिः वर्तते । साच ग्रंथाक्षरमयी मुद्रिता चकास्ति । अनव-धार्यैतत् गौतमधर्मसूत्रापेक्षया गौतमस्मृतिरिति ग्रन्थ एव नास्तीति केचित्प्रलपन्तिलिखन्ति च पुस्तकेऽपि ।

॥ गौतमः किं सामवेदी ॥

गौतमधर्मसूत्रे चत्वारि वेद व्रतानि इति प्राजापत्यादीनां व्रतानां विधानात् श्रवणादिवार्षिकीमिति यजुःश्रावण-विधानात्, तैत्तरीयारण्यक प्रोक्तावकीर्णि प्रायश्चित्तविधानाच्च गौतमोयजुर्वेदीति केषांचिदभिमानः ।

## ।। गौतमस्सामवेदी ।।

सामवेदिनां सन्ध्या ब्रह्मयज्ञ श्राद्धादीनां कर्मणां विधानं, विवाहाच्चतुर्थदिवसे औपासनारंभः इत्यादयोबहवः गृह्यसूत्रेऽस्पष्टाः गौतम स्मृतावेवदृश्यन्ते । धर्मसूत्रचे, अहश्चमादित्यश्च पुनातुस्वाहा, रात्रिश्चमावरुणश्च, इति सन्ध्यामन्त्रः, प्राजापत्य कृच्छ्रनिरूपणावसरे रौरवयौधाजये नित्यं प्रयुंजीत इति साम जपविधिः, प्रायश्चित्तार्थतया जपविधाने राजनरौहिणे, बृहद्रथन्तरे, इति सामविधानं वैश्वदेवप्रयोगः, इत्यादयस्साम वेदीयत्वं गमयति । अपि च सामवेदीयवंशब्राह्मणे, गाता गौतमः, राधोगौतमः, इति सामगाचार्यत्वेन कथ्यते । किंच अपर सूत्रं गौतमप्रणीतमेवे दानीं सर्वैरुपयुज्यते । अतः सामवेदिनां बहुधर्मावबोधक धर्मसूत्र कर्तृत्वात् तादृशस्मृतिकर्तृत्वात्, अपरसूत्रकर्तृत्वात्, सामगाचार्यत्वेननिर्देशाच्च गौतमस्सामवेदी तिज्ञायते ।

चत्वारि वेदव्रतानीति वेदव्रतचतुष्टयविधानं, गोदान व्रातिक महानाम्निकोपनिषत् व्रतचतुष्टयस्यैवावश्यकता बोधनाय । आदित्यव्रतस्यक्वचित् शाखायां विधानंनास्ति, भौतिकब्रह्मसाम व्रतयोः पौनरुक्त्यं, उपनयनव्रतं साधारणमितिमत्वा अष्टव्रतेषु चत्वार्यावश्यकानीत्युक्तम् । श्रवणादि वार्षिकीं, इति उपाकर्मविधानं, 'श्रावणीमित्येके' इति गृह्यसूत्रोक्तश्रावण्यपि

उपाकर्मकालस्सामगानामिति बोधयति । अवकीर्णिनः प्राय श्चित्तविधानसमये तैत्तरीयारण्यकमन्त्रविधाने स्वोक्तेस्सप्रमाणत्वं बोधयति । प्रमाणत्वेन यजुर्वेदग्रहणे स्वयं यजुर्वेदीति न कथमपि वक्तुंशक्यते, यजुर्वेदविहितासु इष्टिषु सोमेसु च मन्त्रणां विनियोजयिता द्राह्यायणः नकैरपि यजुर्वेदीति कथ्यते- अत उक्त हेतूनामा भासत्वात् गौतमस्सामवेदीति पूर्वोक्तप्रमा- णेन सिद्ध्यति ॥

धर्मसूत्रमिदं अध्यायत्रयात्मकं एकोनत्रिंशत्खण्डात्म- कम् । उत्तरदेशीयाः पटलत्रयात्मकं एकोनत्तिंशदध्यायात्मक- मितिव्यवजह्रुः । हरदत्तः, मस्करीचास्यव्याख्यामारचयामासतुः । हरदत्तीयमिताक्षरयासाकं पूना आनन्दाश्रममुद्रणालये मुद्रित- मेतत् । मैसूरु देशे मस्कारिव्याख्यांमुद्रापयामास ।

॥ प्रथमेऽध्याये ॥

धर्मप्रमाणानि द्विजानां उपनयनकालः मुख्योगौणश्च । अजिनदण्ड शिखाविकल्पः । तैजसमृण्मय दारुमयानां शुद्धिः । आचमनविधिः । द्विराचमननिमित्तानि । शौचविधिः । गुरूपसंग्रहणम् । अध्ययननियमाः । गुरुशिष्ययोरन्तराग मने त्र्यहमुपवासइत्यादि । उपनयनात्प्राक् नियमाभावः । उपनयनानन्तरं नियमः । सन्ध्यायाः आसनस्थानविकल्पः ।

ब्रह्मचारिनियमाः, गुर्वनुवर्तित्वम् । भिक्षाऽऽदानविधिः । शिष्य शिक्षण प्रकारः। अध्ययनकालः। आश्रमविकल्पः। यतिधर्माः । वानप्रस्थधर्मः । गृहस्थाश्रमस्यप्राधान्यम्। विवाहभेदाः, तत्र धर्म्या अधर्म्याश्च। अनुलोमप्रतिलोमानां उत्पत्तिः। विवाहभेदेन सन्ततेरुत्कर्षापकर्षौ। ऋतुगमनम्। औपासनारंभकालः । वैश्वदेवहोमः बलिहरणम्। दानपात्र-निरूपणम् । फलतारतम्यम् दानस्यावश्यकता कुत्रचित्। क्वचिद्विषयेऽनृतस्यापातकत्वम् । स्वभोजनात्पूर्वं भोजयि-तव्याः । मधुपर्कपात्रनिरूपणम् । श्रोत्रियादीनामुपस्थाने कर्तव्यम्। पूज्यानां समवाये पादोपसंग्रहण प्रकारः। मान्यता निमित्तानि। आपत्कालेविद्याग्रहणम् अवरादपीतिनिरूपणम् । आपत्काले वृत्तिः। तदाऽपि अपण्यानि। प्रपंचरक्षणं ब्रह्म-क्षत्राधीनम्। चत्वारिंशत्संस्काराः। अष्टावात्मगुणाः संस्कारापेक्षया आत्मगुणानां श्रेष्ठत्वनिरूपणम् । स्नातकस्य गृहस्थस्यच धर्माः । नित्यं शुचित्वादि । अजीर्णमलवद्वासस्त्वम् । अकारणं श्मश्रुकेशादिवर्धनम् । दारोपगमनप्रकारः। नित्यं-वर्ज्यानि । मूत्रणादिविधिः । दिनस्य सफलत्वकरणम् । आत्तवीर्यस्याभक्षणम्। अशने स्वापेच नियमः। उक्तनियमा-चरणे ब्रह्मलोकप्राप्तिः ।

## द्वितीयाऽध्याये

द्विजानामध्ययनयागदानानि आवश्यकानि । प्रवचन-याजन प्रतिग्रहास्तु वृत्यर्थाः । वेददानपात्रम् । प्रजारक्षणं राज धर्मः । संग्राम नियमः । तत्र जेतुः जितस्य धनम् । चतुर्थ-वर्णस्य एकजातेः सत्याक्रोध शौचादयो धर्माः । राज्ञः सर्वेशि-तृत्वं ब्राह्मणं विहाय । प्रजासु समवर्तित्वम् । विद्यावृत्तशील संपन्नं पुरोहितं वृणीत । तदनुमत्या राजकार्याणि कुर्वीत । ब्राह्म-णानुमतश्चत्रियः वृद्धिं प्राप्नुयात् । मान्त्रिकानां ज्यौतिषिकानां च साहाय्येनराज्यं कुर्वीत । शान्त्यर्थानां होमः लौकिकेऽग्नौ । देशधर्मजातिधर्म कुलधर्माणां प्रमाणविरोधे अनादरणीयत्वम् । कर्षकवणिगाद्याचारान् यथासंप्रदायं रक्षेत् । वर्णधर्माश्रम धर्माणां स्वर्गादिफलदानानन्तरं पुनर्जन्मनि विशिष्टदेश जाति कुलरूपादि प्रयोजकत्वम् । वर्णाश्रमधर्माननुष्ठाने ततोनिवर्तनं राजदण्डेन आचार्योपदेशेन च । अतः राजाचार्यौ अनिन्द्यौ-वन्द्यौ च । अनन्तरं अपराधानुगुणं दण्डः वादिप्रतिवादिनो र्विप्रतिपत्तौ साक्षिनिमित्तसत्यव्यवस्था । साक्षिणोनियमाः । व्यवहारे दण्डनियमः । आशौचप्रकरणम् श्राद्धप्रकरणम् । तत्र अन्नादिसंस्कारप्रकर्षः । निमन्त्रणीय ब्राह्मण लक्षणम् । अनिमन्त्रणीयाः के । पितॄणां प्रियतमानिद्रव्याणि । निमन्त्रित

नियमः। श्राद्धं परिवृत्तेदेशे कर्तव्यम्। पङ्क्तिपावनाः। दैवे पित्र्येच कर्मणि ब्राह्मणाः वरणीयाः के?। उपाकर्मकालः। उत्सर्जनकालः। अनध्यायाः। भोज्यान्नाः के? प्रतिग्राह्याः के? एधोदकादीनां सर्वतस्संग्रहणम्। अभोज्याः पदार्थाः गोमहिष्योः प्रसूत्यनन्तरं दशाहमध्ये पयः निषिद्धम्। विवत्सा पयश्चाग्राह्यम्। दृष्टे दुष्टंयत् तस्यदोषपरिहारः। स्त्रीण मस्वातन्त्र्यम्। कन्यादान कालः ऋतोः प्राक्। विवाहसिद्ध्यर्थमन्य वर्णादपि धनं गृह्णीयात्। तत्रनियमाः। धर्मकार्यस्य विघ्नसंभवे राज्ञा तदपनोदः कर्तव्यः। तदकरणेदोषः।

॥ तृतीयाध्याये ॥

प्रायश्चित्तप्रकरणम्। अयाज्य याजनाभक्ष्य भक्षणावद्यव दन विहितकर्मत्यागनिषिद्धकर्मकरणादौ पापकर्मणि तन्निर्हरणार्थं प्रायश्चित्तं कर्तव्यं उत नकर्तव्यमिति संशयं प्रापय्य पूर्वपक्ष-सिद्धान्तौ व्यवस्थापयति। नकर्तव्यमिति केचनाहुः। कथमिति चेत् अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम्। नाभुक्तं क्षीयते कर्म कृतं जातु शुभाशुभम्॥ इतिवचनात्

कुर्यदित्यपरम्मतम्। "पुनस्तोमेनेष्ट्वापुनस्सवनमायन्तीति विज्ञायते"। "व्रात्यस्तोमैश्चेष्ट्वा। "तरति सर्वं पाप्मानं तरति

ब्रह्महत्यां योऽश्वमेधेनयजते"। अग्निष्टुताऽभि शस्यमानं याजयेत् इत्यादि श्रौतप्रामाण्यात्। अत्रायाज्ययाजनादौ पुनस्तोमः, उपनयनादौकालातिक्रमे व्रात्यस्तोमः, ब्रह्महत्यादौ महापातकेऽश्वमेधः। दोषवत्वेन प्रथितस्याग्निष्टुत्, इतिव्यवस्था। एवं प्रायश्चित्तं कर्तव्यमिति निर्णीय तस्य निष्क्रयणानि इत्यारभ्य जपहोमोपवासादयोविहिताः। तत्र जपविधाने सर्वेषु वेदेषु संहितापारायणम्। उपनिषदः। रुद्रपुंसूक्तादिः। राजनरौहिणादिसामानिविहितानि। अनन्तरं तपआदीनिविहितानि। क्वचित्पापाचरणविषये पितरमपित्यजेत्। त्यक्तस्य और्ध्वदैहिकविधिः। महापातकलक्षणम्। तेषां प्रायश्चित्तम् सविस्तरम्। रहस्य प्रायश्चित्तम्। अवकीर्णिनः शक्तिक्षयप्रकारः। तस्य प्रायश्चित्तम्। प्राजापत्यादिकृच्छ्रविधानं सामजपविशिष्टम्। चान्द्रायणविधिः। दायविभागः पित्रोरूर्ध्वमुख्यः स्त्रीधनस्य विभागः। पुत्रा द्वादशविधाः। तेषां लक्षणम्। अदायादाः पुत्राः : परिषल्लक्षणम्। धर्माचरणेन, यथावत् धर्माणां परिज्ञानेन वा स्वर्गादिपुण्यलोकप्राप्तिः। इत्यादयो बहवः प्रतिपादिताः। एवं गौतमधर्मसूत्रं आचारव्यवहार प्रायश्चित्ताध्यायात्मकं पूर्यते। अत्रगौतमधर्मसूत्रे चत्वारिंशत् संस्काराणां परिगणनं गर्भाधान, पुंसवन, सीमन्तोन्नयन, जातकर्म, नामकरणान्न-

प्राशन, चौलोपनयनं, चत्वारि वेदव्रतानि, स्नानं, सहधर्मचारिणी संयोगः, पंचानां यज्ञानामनुष्ठानं देवपितृमनुष्य भूतब्रह्मणाम्, अष्टका, पार्वणः, श्राद्धं श्रावणी, आग्रहायणी, चैत्र्याश्वयुजीति सप्तपाकयज्ञसंस्थाः अग्न्याधेय मग्निहोत्रं दर्श पूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबंधस्सौत्रामणीति सप्तहविर्यज्ञसंस्थाः, अग्निष्टोमोत्यग्निष्टोम उक्थ्यष्षोडशी वाजपेयोऽतिरात्रोप्तोर्यामइति सप्तसोमसंस्थाः इत्येते चत्वारिंशत्संस्काराः। इति संस्काराणां स्पष्टतयागणनंस्मृत्यन्तरे नोपलभ्यते। अपि कन्यादानकालः स्मृत्यन्तरे। यावन्नलज्जते कन्यायावत्क्रीडतिपांसुषु दशवर्षाभवेत्कन्या अत उर्ध्वं रजस्वला इत्यादिना कालसंकोचः कृतः। गौतमेनतु "प्रदानं प्रगृतोः इति कराले कलियुगेऽपि धर्मव्यतिक्रमोमाभूदिति ऋतुपर्यन्तं मुख्यः कालइत्युक्तः, प्राजापत्यादि कृच्छानुष्ठानं। तिष्ठेदहनि रात्रावासीतक्षिप्रकामः इत्यादि रौरवयौधाजयादिसामजपोदकतर्पणादित्योपस्थान चरुश्रपणहोमतर्पणसहितं विधीयते। चान्द्रायणं च वैदिकेनमन्त्रेण हविरनुमन्त्रण होम पूर्वकं ओंभूर्भुवरित्यादि मन्त्रेणैवप्राशनंपंचदशदिनेष्वपि इत्यादिकंमनुयाज्ञवल्क्यादिभिरप्यनुक्तम्। अपि च गौतम धर्मसूत्रम् बोधायनापस्तंबापि, सूत्रापेक्षयातिप्राचीनं, भगवत्पादा अपि अस्मरन्—

## ।। गौतम सूत्रपरिशिष्टम् ।।

गौतमसूत्रपरिशिष्टं इति, क्रियाकाण्डमिति वा प्रसिद्धमिदं। अत्र विंशतिः अष्टादशवा अध्यायास्सन्ति। मैसूर् नगरे-मुद्रापिते मस्करी भाष्यसहित गौतमधर्मसूत्रेऽन्तिमभागत्वेन मुद्रितम्। चेन्नपुरीनिकटवर्ति अडयार् पुस्तकालये (कोशागारे) च मुद्रितम्। अत्र दिनचर्या आह्निक धर्माः स्नानसन्ध्या-होमपूजनादयः अवश्यानुष्ठेयास्सु बोधतया प्रतिपादिताः। कर्मविपाकः मोक्षप्राप्त्युपायः, पापप्रभेदाः, तत्प्रायश्चित्तानिच प्रतिपाद्यन्ते।

"अथातोधर्मशेषान् व्याख्यास्यामः" इत्यारभ्यते। ब्राह्ममुहूर्ते उत्थाय प्राणायामपूर्वकं गुरुध्यानम्। शौचविधिः। आचमनं, दन्तधावनं स्नानभेदाः, यज्ञोपवीतवस्त्रधारणम्। उपवीतरचनं, तन्महिमा, पुण्ड्रधारणं, सन्ध्योपासनं, आसन जपमाला विशेषः। पितृतर्पणं, देव पूजनं, गुरुवन्दनं, आतिथ्यं, प्राणाहुतिः, तांबूलचर्वणमित्यादि।

## ।। गौतमस्मृतिः ।।

इयं गौतमस्मृतिः। अत्र नारदेन धर्मजिज्ञासयापृष्टः गौतमः श्लोकरूपेणैव सकलान् धर्मान् बोधयामास। चतुर्दशा-

ऽध्यायात्मिका पंचाशदुत्तरषट्छत श्लोकात्मिकाच। चेन्नपुर्यां विद्यानिकेतनं मुद्राक्षरशालायां 1894 क्रि-पि-वत्सरे मुद्रिता च ग्रन्थाक्षरमयी।

प्रथमेऽध्याये—धर्माचरणस्य देशः, कालः, धर्मप्रमाणानि—

द्वितीये—शौचस्यावश्यकता। तत्र मृत्प्रक्षेपः मूत्रपूरीषयोः।

तृतीये—तदपि आश्रमभेदेनभिन्नम्। दन्तधावनं तदर्हकाष्ठानि। गण्डूषविधिः।

चतुर्थे—आचमन भेदाः। तस्य प्रकारः।

पंचमे—स्नानप्रकारः। स्नानांगानि। सन्ध्योपासनं, तत्र अहश्च मादित्यश्चेत्यादयो मन्त्राः अर्घ्यविधिः तत्प्रकारः। प्रायश्चित्तार्घ्यम्। गायत्रीध्यानप्रकारः इत्यादि।

षष्ठे—वन्दनविधिः। गायत्री जपविधिः। तत्र देशभेदेन फलभेदः। गायत्र्युच्चारणप्रकारः। आदित्योपस्थानम्।

सप्तमे—प्रतिलोमगायत्री - उपस्थानफलम् - समिदाधानम् - विवाहात् परं चतुर्थदिने औपासनारंभः। औपासनप्रकारः। स्थालीपाकविधिः। संक्रमणश्राद्धम् - सगोत्रविवाहे कर्तव्यम्। पापनिर्हरणार्थं जपः। पवमान शुक्रिय रुद्रसूक्तादि जपविधिः।

अष्टमे—आज्यतन्त्रचरुतन्त्रभेदेन अग्नि निधानम्। श्राद्धे पादप्रक्षालनादि। महालयश्राद्धम्। दुर्मृतौ प्रायश्चित्तम्। मृतस्य पुनर्जीवनप्राप्तौ ग्रहणप्रकारः। दशाहकृत्यप्रकारः। अनभिगम्यस्त्रीगमने प्रायश्चित्तम्। उपनयनानन्तरं ब्रह्मयज्ञ-करणम्। कृच्छ्रप्रतिनिधयः। आशौचम्।

नवमे—और्ध्वदैहिक कर्मविचारः। वपनविधिः। तत्र अग्निनिर्णयः। द्वादशाहादिविधिः। आब्दिकम्। तत्रतिथिर्ग्राह्या-वर्जनीया च आमहिरण्यश्राद्धविधिः।

दशमे—निमन्त्रणीया ब्राह्मणाः वर्जनीयाः। निमन्त्रणे प्रायश्चित्तम्। श्राद्धेग्राह्याः पदार्थाः वर्ज्याश्च। पिण्डदान तिलतर्पण विधिः। कर्तृभोक्तृनियमः।

एकादशे—श्राद्धांगतर्पणम्। कस्मिन् श्राद्धे कदा तर्पणम्। तर्पणप्रकारः। तर्पणे तिथिवारनिरीक्षणम्।

द्वादशे—अग्निसमारोपणम्। जातेमृते च वपनविचारः। श्राद्धे वैश्वदेवः। भोजनविधिः।

त्रयोदशे—भोजने पङ्क्तिनियमः तत्र ग्राह्यत्याज्यपदार्थाः। दर्शपूर्णमासकालः। सापिण्ड्यविधिः। दर्भेषु स्त्रीत्वपुंस्त्व-विचारः। कर्मभेदेन तद्व्यवस्था। वस्त्रनिष्पीडन विधिः।

यमतर्पणम् । औषधादि सेवनेऽपि ब्रह्मयज्ञः कार्यः । यज्ञोपवीत-निर्माणम् । ग्रन्थिः, धारणम् । अर्घ्यदानं, प्रायश्चित्ताघ्यम् ॥

चतुर्दशे—पात्रोद्धृततोयेन सन्ध्याकरणेविधिः । मार्जनम् । गायत्र्या भिन्नपादत्वेनजपः ।

अत्र सन्ध्या, सामजपादिविधिः सामगानां औपासनारंभः विवाहाच्चतुर्थेदिने, इत्यादयः अवश्यविज्ञेयाविषयाः प्रतिपादिताः छन्दोगानाम् ॥

॥ अपरसूत्रम् ॥

अपरसूत्रं गौतममहर्षिणा प्रणीतम् । अपरकारिकाकारः प्रणम्यगौतमाचार्यं सूत्रमाश्रित्यतत्कृतमिति, प्रयोगमणि दर्पणकरः अक्षपादीयसूत्रार्थमालोच्यान्यस्मृतीरपि इतिच, गौतमकृतत्वेन भणति, अतः गौतमः कर्तेति ज्ञायते ।

इदं पटलद्वयात्मकं त्रयोदशखण्डात्मकं च वर्तते । जीवस्य शरीरात् लोकान्तरंप्रतिगमनसमये सुखेन गमनार्थं सामजपः, निर्गतेसंस्कारक्रमः, तदर्थमग्न्युत्पत्तिः आश्रमभेदेन, अग्निसन्धान-प्रकारः, संस्कारप्रयोगः "यथोक्तं सामगानमनुगीतो ब्रह्मलोकमवाप्नोति" इति सुस्वरसामगानेन ब्रह्मलोकावाप्तिरुच्यते । न पृथग्ब्रह्ममेधसंस्कारोविहितः । एवं आद्वादशाहं प्रयोगाः

कथिताः । अनन्तरं श्राद्धप्रयोगः । पार्वणस्त्रिपुरुषोद्देश्यः । एकोद्दिष्टः एकोद्देश्यकः "प्रायणकाले प्राक्स्मृतिवियोगात्" इत्यारभ्य एतेपिण्डा व्याख्याताः इति पूर्यते । इदं सवृत्ति वरहूरु श्रीकृष्णस्वामि श्रोतिभिः मुद्रापितम् । दुर्लभमिदानीम् ।

॥ अपरकारिका ॥

कर्मणामनुष्ठानोपयोगिनीकारिकेति सर्वसूत्रेषु विद्यते । सूत्रेणैवानुष्ठानपद्धतिर्ज्ञातुमशक्या । अतः एतत्सूत्रानुसारेण अपरकारिकेति कश्चनग्रन्थः वर्तते । इयं विशदतया प्रयोगान् बोधयति । नवखण्डात्मिकैषा । प्रणम्यगौतमाचार्यं सूत्रमाश्रित्य तत्कृतम् । कारिकासंग्रहं वक्ष्ये सुबोधायाल्पमेधसाम्, इत्यारभ्य,

अनु ग्रहेण च गुरोः हरेश्च कृपयामया ।
सूत्रं च सूत्र वृत्तिं च समालोच्य यथा विधि ।
संस्कारादि सपिण्डयन्त कारिका संग्रहः कृतः ॥

इति समाप्यते ॥ एतदपि पंचनदेमुद्रितम् ॥ गीर्वाणवाणी-मुद्रणालये ॥

॥ गृह्य परिशिष्टम् ॥

प्रायशः प्रतिसूत्रं गृह्यसूत्रापेक्षया परिशिष्टग्रन्थो विद्यते । सामवेदे गृह्यसूत्रानुक्तानि कानिचित् उक्तानामपि केषां चित्

प्रयोगविशेषाः विधीयन्ते गृह्यपरिशिष्टाख्येनाने न ग्रन्थेन। परिशिष्टान्तरापेक्षयाऽस्य कश्चन विशेषः। यत् गृह्यसूत्र परिशिष्टयोरेकः कर्ताऽन्यत्र। अत्र तु सूत्रकर्ता खादिरः परिशिष्टकर्तारः बहवः। तत्तत्खण्डान्ते नामनिर्देशश्चकृत इति।

इदं च प्रपाठकद्वयात्मकं एकचत्वारिंशत्प्रकरणात्मकं विलसति।

॥ प्रथमप्रपाठकः ॥

शौचविधिः, ग्रामाद्दूरतरं गत्वा यज्ञोपवीतं शिरसिदक्षिण-कर्णेऽपिवा काष्ठमन्तर्धायोपविशेत्। एकालिंगे गुदेतिस्रः दशवामकरेतया इत्यादि, मृत्तिकाविधिः। आचमनविधिः बद्धशिखोयज्ञोपवीती। न चोष्णाभिर्नफेनाभिः नक्षाराभिरद्भिः, न बहिर्जानु, ब्राह्मणस्य दक्षिणे हस्तेपंचतीर्था भवन्ति, इत्यादि सविस्तरं आचमनमुक्तम्। अनन्तरं समिदाधानं भस्मधारणम्। यज्ञोपवीतनिर्माणं तत्प्रतिष्ठां ग्रन्थिकरणं धारण-मन्त्रः। ततः सन्ध्योपासन विधिः। गायत्रीजपस्य संख्या तत्फलम्। संध्याया अकरणे दोषः तत्प्रायश्चित्तम्। ब्रह्मयज्ञ-विधिः तत्र सावित्र्युच्चारणप्रकारः। विस्तरशः प्रयोगः। औपा-

सनविच्छेदे पुनराधानविधिः । औपासनप्रयोगः । शाट्यायनि प्रोक्तानि प्रायश्चित्तानि । अथाष्टव्रतानां प्रयोगः सेतिकर्तव्यताकः विधीयते । प्रतिसरबन्धविधिः रक्षाबन्धनम् । अंकुरार्पणकर्म । पालिकाः सुवर्णमय्यः अलाभेराजतादयः । तत्प्रयोगः । पुण्याहवाचनं । उदकशान्तिविधिः तत्प्रयोगः कुत्र कर्तव्यमित्यादिः । प्रथमार्तवशान्तिः । उपाकर्मप्रयोगः उत्सर्जनविधिः । रुद्रसंहितायान्यासविधिः । महाभिषेकः । शताभिषेकविधिः नवकलशान् स्थापयित्वा तत्र पूजादि प्रयोगः । पर्जन्यसूक्तविधिः । अर्कविवाहः रम्भाविवाहः । आग्निद्वयसंसर्गविधिः ।

॥ द्वितीयप्रपाठकः ॥

अग्निविभागः । विभक्तस्य विनियोगप्रकारः । ततः गृहशान्तिविधिः । गृहाराधनं सविस्तरमुक्त्वा गृहाणां समिदन्नादिभेदेन होमः । उपहोमः सामसूक्तजपः दक्षिणादानम् ॥ अंकुरार्पण प्रतिसरोदकशान्ति प्रयोगाः श्लोकरूपेणविस्तरशः । मृत्युंजयध्यानं, पूजा, होमः सूक्तजपादि तस्य फलम् । आयुर्होम प्रयोगः तत्र मन्त्रः सामजपः तत्फलम् । सर्वेषामपि होमानां अंगवैकल्ये प्राजापत्यान्तपंचकपाहित्रयोदशकहोमयोर्व्यवस्था । जृम्भणादि निमित्ते च प्रायश्चित्तहोमः । ब्राह्मणाः

स्थाने कूर्चनिधानेविधिः । परिस्तरणदर्भसंख्या । आहुति प्रमाणम् । स्तरणाग्न्योः मध्ये न परिषेचनम् । समिल्लक्षणम् सायंप्रातर्होमयोः गौणकालः । औपासनविच्छेदे कियत्पर्यन्तं प्रायश्चित्तं प्रधानांगश्लेषेकदा कर्तव्यं, वैश्वदेवस्थालीपाकावश्यकता । जातकर्मादीनां वेदव्रतानां च स्वस्वकालातिक्रमे प्रायश्चित्तम् । विवाहमध्येवह्निनाशे कथं कर्तव्यम् । अपरक्रियायां शिलाकुम्भ-वासोद्रव्यविनाशे पुनः करणम् । नवग्रहहोमः श्लोकरूपेण । नागप्रतिष्ठा प्रयोगः । गर्भिणीसंस्कारः । वृषोत्सर्गप्रयोगः । एकोद्दिष्टप्रयोगः अभ्युदयश्राद्धप्रयोगः । पिण्डपितृयज्ञविधिः । नारायणबलिः । दुर्मृतानां नारायण बलिः । सहस्रभोजनविधिः । वृष्टिप्रदायकशान्तिः श्लोकरूपा । वृष्टिप्रदपूजाजपहोमाः । सामान्यतः प्रायश्चित्तार्थ सूक्तजपेनियमाः गौतमोक्ताः । अश्वत्थप्रतिष्ठा विधिः अश्वत्थोपनयनं अश्वत्थविवाहः । अघमर्षण जपः । जडबधिरमूकोपनयनम् । पुत्र प्रतिग्रहविधिः । अद्भुत-शान्तिः । आहिताग्निसंस्कारप्रकारः । उत्सर्जनतर्पणम् । वेदारंभक्रमः । एतावदुक्त्वापूर्यते ग्रन्थः ॥

॥ प्रयोगमणिदर्पणम् ॥

अयंग्रन्थः अपरसूत्रानुसारेण यथा क्रमं प्रयोगान् वदति । अस्य कर्ताकौशिककुलोद्भवः नारायणसूरीति ज्ञायते ।

अत्र प्रयोगकथनावसरेतत्तद्विषयान् सप्रमाणं विचार्य निर्णयः क्रियते । यथा प्रथमत एव श्रुत पूर्विणां चेत्, तव श्यावीयानि इति बहुवचनमुक्तं सूत्रे । तस्योपपत्तिः निदानसूत्रमादायवि-चार्यनिर्णीता । एवं बहुषु स्थलेषु कर्तृक्रमे यमकपुत्रविषये शिशुमृतौ, दशाहमध्ये दर्शसंक्रान्ति समागमे पुत्राणामसन्निधाने सापिण्ड्यकालनिर्णये जननाशौचमरणाशोचविषयेच

स्मृति वचनान्युदाहृत्यसयुक्तिकं विचार्यनिर्णयः कृतः ।
अक्षपादीयसूत्रार्थमालोच्यान्यस्मृतीरपि ॥
प्रणम्यास्मद्गुरून् वक्ष्ये प्रयोगमणिदर्पणम् ॥

इत्यारंभः । मुमूर्षुमन्त्यसमये पुत्रादिर्मन्त्रैः स्नाप्य, इत्यादिना दानानि वेदमन्त्रजपः गोदानं, कर्तृक्रमः, कर्ता यदि ब्रह्मचारी, अनुपनीतः, स्त्री, कनिष्ठाभावे ज्येष्ठः, इत्यादौ निर्णयः, संस्कारविधिः, अग्नि द्वयसंसर्गविभागौ । ब्रह्मचार्यादीनां अग्निनिर्णयः इत्यादि प्रथमखण्डे ।

द्वितीये शवहरणं रुद्रभूमिसंस्कारः, अग्नि संस्कारः अनन्तर कर्तव्यानि, नदीतीरगृहद्वारकुण्डविधिः पिण्डबलिप्रदानं एकोत्तर-वृद्धिनवश्राद्धानि असगोत्रदाहे समापन प्रकारः बालमृतौ कन्यामृतौच संस्कारः सापिण्ड्यविचारः, गर्भिणीसंस्कारः इति । संचयनं, वपनविचारः गर्भवतीवपनम् प्रथमदशमदिनयोः वपन-

विधिः, आशौचिनियमः, अस्थिपर्णदाहविधिः, पुनर्दहन निमित्तम् तद्विधिः, दशाहमध्ये दर्शसंक्रमणागमे कर्तव्यं, दशाहकृत्यं, आशौचनिर्णयः संघातमरणेऽव्यवस्था, पुत्राणामसन्निधाने विदेशस्थः दशाहमध्ये आगतः। परमागतः, ज्येष्ठेनैव आब्दिकपर्यन्तं कर्तव्यं, देशान्तरे मृतस्य संस्कारः तस्यतिथिः, यदि पुनरागच्छेत् कृतसंस्कारादिकः, इत्यादि विचार्यते तृतीय चतुर्थयोः। अथ वृषोत्सर्गप्रयोगः आद्यमहैकोद्दिष्टं, आवृत्ताद्यं, आशौचेऽपि एकोद्दिष्टम्। द्वादशाह सापिण्ड्यं, तत्पूर्वं पंचदशमासिकानि, सपिण्डीकरणविधिः, अर्घ्य पिण्डसंयोजनम् तिथिनिर्णयः पंचदशमुहूर्ताः। एकस्मिन् दिने श्राद्धद्वय संभवे षण्णवति श्राद्धानि इति पंचमषष्ठयोः। एवं खण्डषट्केण बहवो-विषयाः सम्यक्विचार्यनिर्णीताः। इदं मधुकरवेणि मुद्राक्षरशालायां मुद्रितं चेन्नपुर्याम्॥

॥ श्रौतप्रयोगः ॥

आण्डपिळ्ळै, इतिप्रसिद्धयशाः कश्चित् पण्डितवरः त्रिवेद श्रौतप्रयोगं रचयामासेति ज्ञायते। तत्प्रयोगे याज्ञिकानां महाविश्वासोवर्तते। अतः प्रामाणिकोऽयं ग्रन्थः। तस्य प्रयोगस्य क्वचिद्विरामसमयेऽयं श्लोको दृश्यते।

छन्दोगस्य प्रयोगस्य वृत्तिरेषा प्रदीपिका।
कृतात्रैविद्यवृद्धेन ताऴवृन्तनिवासिना ॥

अयमेव आण्डपिळ्ळै इति कथयन्ति याज्ञिकाः।
सामवेदीय श्रौतप्रयोगमधिकृत्य

अग्निष्टो मादि सप्तसोमसंस्थाः अहीनक्रतवः द्वादशरात्रादयः चयनप्रयोगः इत्यादिकं ताण्ड्यादि ब्राह्मण द्राह्यायणादिश्रौतसूत्रानुसारेण रचितवान्। तद्ग्रन्थारंभः एवं। द्राह्यायणीय कात्यायनीय पातञ्जलवाररुचमाशकानुपसंगृह्यकेवलं पंचविंशब्राह्मणोक्तमप्युपसंगृह्यषड्विंशब्राह्मणोक्तसासिसुब्रह्मण्यादीनुपसंगृह्य उपनिषदुक्त लोकद्वारादीनुप-संगृह्यशाखान्तरीयान-विरुद्धानपेक्षितानुपसंगृह्य मखस्वामि रुद्रस्कन्दादीनुपसंगृह्य ज्योतिष्टोममारभ्य विश्वसृजामयनपर्यन्तानां यज्ञक्रतूनां प्रयोग उच्यते। अथ परिभाषा। उद्गातैव कुर्यादनादेशे। सोमप्रवाको यज्ञशर्मणस्सोमो भविष्यतीत्यारभ्य क्रमेण प्रयोगः कथ्यते। प्रयोगानुपूर्वीपरिज्ञानाय श्लोकरूपेण कारिकापि काचन तत्तत्प्रयोगावसानेलिख्यते। साऽपि तेनैव कृतेति ज्ञायते। ताण्ड्य ब्राह्मण भाष्ये सायणाचार्येण क्रतुसंग्रह कारिकेति काचनकथ्यते साऽन्या। आनुपूर्वी भेदात्। आतिथ्यान्ते सुब्रह्मण्याह्वान प्रयोगं समाप्य कारिकां कथयति।

अथेति मंगळार्थः स्यात्सर्वं क्रत्वर्थ एव च ।
सुब्रह्मण्यायजुः प्रायश्चित्ताम्नायस्तथैवच ॥

एवं रूपेण तत्तत्प्रयोगावसाने प्रयोगं संगृह्य ज्ञापयति । किंच अग्नीषोमीयवपा होमानन्तरं नामसुब्रह्मण्याह्वाने तत्प्रकारं विलिख्य तत्र प्रमाणानि कथयति ॥ यदि पुत्रात्पौत्रोज्येष्ठः तदा पुत्र वर्गं समाप्यैव पोत्रवर्गाह्वानं तथा पौत्रान्नप्तायदिज्येष्ठः । तदा पौत्र वर्गं समाप्यैव नप्तॄणामाह्वानम् । इत्यादि स्मृति वचनमुदाहृत्यवदति । सुब्रह्मण्या स्वरविषयेऽपि प्राक्सुत्या देशात् सूत्रपठितस्वर एव । तत्रापि महाभाष्यकारः इत्यादिना समर्थयामास । अपि च प्रवर्ग्यसामजपविषये धेनुषामाधिकृत्य किंचनसूत्रं समस्येत् पददेवते इति शाण्डिल्यः इति । तत्र औहोवा इत्युक्त्वा हो इत्यन्तमपोह्य स्नादिष्ठयेत्याह इति विवृतम् । एवं स्पष्टतया द्राह्यायण सूत्र व्याख्यानेपि नदृश्यते एवं बहिष्पवमानगानमपि विशदतया सस्वरगान निर्देशपूर्वकं विवृतम् । एवं अग्नि चयन प्रयोगेऽपि उपस्थान साम्नां स्थल निर्देशपूर्वकं सामानि प्रतीकग्रहणेन स्पष्टयामास । अप्तोर्यामस्त्रिविधः केवलाप्तोर्यामः ज्योतिरप्तोर्यामः सर्वस्तोम सर्वपृष्ठाप्तोर्याम इति सूत्र विवरण पूर्वकं स्पष्टीकृतः । एवं सर्वेषामपि प्रयोगाणां तत्र तत्र मूल-

ग्रन्थानुदाहृत्य कथनं समेषां याजकानां महते उपकाराय भवतीत्यलं विस्तरेण ॥

॥ पुरुषोत्तमभट्टीयम् ॥

अग्निष्टोमादीनां प्रयोगः पुरुषोत्तमभट्टाख्येन केनचित्पण्डितेन विरचितोविलसति । कुत्रचित् प्रयोगावसाने ।

पुरुषोत्तमभट्टेनदेवराजार्य सूनुना ।
प्रयोगपारिजातोऽयं सर्वपृष्ठक्रतौकृतः ॥

इति वर्तते । अतः प्रयोगपारिजाताख्य प्रयोगविशेषं रचितवानितिज्ञायते। सूत्रानुसारेणैव वर्तते सुबोध तया परं प्रमाण ग्रन्थोल्लेखो नास्ति । साम्नां प्रतीकमात्रग्रहणं विना प्रस्तावादिभक्तीः पूर्णतयादर्शयामास । अतः प्रयोग बुभुत्सूनां विनाक्लेशंसुबोधायभवति ।

॥ श्रीनिवासदीक्षितीयम् ॥

सामवेदीयश्रौतप्रयोगः श्रीनिवास दीक्षितीयमितिकश्च न प्रयोगोविद्यत इति श्रूयते परंपुस्तकं नोपलभ्यते नापिमुद्रितमिति ज्ञायते । अनुद्धरणादि सर्वविधप्रायश्चित्त विधायकं श्रीनिवासदीक्षितीयमिति आध्वर्यवं किंचित्पुस्तकं वर्तते तदन्यत् ।

॥ श्रौतकारिका ॥

अग्निष्टोमादिषु यागेषु उद्गात्रादीनां कर्तव्य क्रियाकलापज्ञापिका श्रौतकारिकेति कश्चनग्रन्थः वर्तते। इयं च कारिकाश्रौतप्रयोगकर्तृभिः अवश्यं ज्ञातव्या अनुष्ठानक्रम सौलभ्याय। "तत्रादौव्रत उद्गाता महदित्यादिकं जपेत्" इत्यारभ्य क्रमेण प्रयोगं बोधयति।

श्रौतप्रायश्चित्तबोधिका सामवेदीयौद्गात्रादिशेषप्रायश्चित्तविधानार्थमन्याकारिका विद्यते। दोषनिर्हरणार्थाय ऋत्विगेकैकः तां सम्यक् जानीयात्। ऋत्विजांमन्त्रशेषे यजमानस्य विपरीतफलं स्यात्। ऋत्विजामपि दोषोभवति।

"मन्त्रोहीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह सवाग्वज्रोयजमानं हिनस्ति यथेन्द्र शत्रुः स्वरतोऽपराधात्॥

प्रहीणः स्वरवर्णाभ्यां यो वै मन्त्रः प्रयुज्यते।
यज्ञेषु यजमानस्य रुशत्यायुः प्रजाः पशून्॥

इत्यादिना दोषस्मरणात्।

"गणेशं शंकरं नत्वा कल्पकारांस्ततः परम्।
प्रायश्चित्तानि वक्ष्येऽहं क्रतु वैगुण्यशान्तये॥

इत्यारभ्य। एवमेवान्ययोः कुर्युः स्तोत्रसाफल्यसिद्धये"

शेषं प्रकृतिवत् कर्म सवनेषु त्रिषून्यते ॥

इति अष्टोत्तरशतश्लोकात्मकः ग्रन्थः विद्यते । नमुद्रितः । अस्य गणेश कारिका, कल्पकारिका, इति नामप्रथते ।

॥ स्मार्तप्रयोगः ॥

पुरुषोत्तमभट्टेन श्रौतप्रयोगवत् प्रयोगपारिजाताख्यः कश्चन-प्रयोगविशेषः स्मार्तस्यापि रचितः । क्वचिल्लभ्यते आण्डपिल्लै प्रयोगोऽपि विद्यत इति श्रूयते स्मार्तस्य तन्नोपलभ्यते । श्रीधरीय-मिति स्मार्तकर्मानुष्ठापनप्रयोगो विद्यत इति श्रूयते ।

॥ वामनकारिका ॥

वामनकारिकेति कश्चनग्रन्थः स्मार्तपूर्वापरप्रयोगान् सेति कर्तव्यताकान् गृह्यसूत्रापरसूत्र रुद्रस्कन्दवृत्त्यनुसारेणविधत्ते । गृह्यसूत्रे वृत्तौचा स्पष्टान् काम्यप्रयोगान् वृष्टिपशुपुत्रारोग्यसाधन-भूतान्, अर्ककदलीविवाहौ रजस्वलासूतिकागर्भिणी संस्कार-क्रमान्, आहिताग्निसंस्कारं च गृह्येनुक्तान् बोधयति । दक्षिण-देशीयार्वाचीनप्रयोगग्रन्थानां इदमेवनिदानमित्यपिवक्तुं शक्यते ।

"प्रणम्यखादिराचार्यं गृह्यमाश्रित्यतत् कृतम् ।
संक्षेपेणपदार्थानां स्मार्तानां वक्ष्यते क्रमः ॥
अन्येष्वपाद बद्धेषु पूर्वपूर्वेषु सत्स्वपि ।
वाक्यधारण सौख्यार्थं क्रियते पद्यया गिरा ॥

एवमारभ्यश्लोकरूपेण सर्वप्रयोगानुक्त्वा एवमुपसंह्रियते ।

"खादिरान् सम्यगालोच्य वामनेन मयाकृताम् ।
पद्यभूतां कृतिं प्राज्ञाः परिगृह्णन्तुनिर्ममाः ॥ इति

वामनाख्येन पण्डितेन कृतेति ज्ञायतेऽन्तिमश्लोकेन, नेदम्मुद्रणामलभतैतावत् ।

॥ शाट्यायनकारिका ॥

इयं शाट्यायनकारिका विवाहादीनां गृह्योक्तानां कर्मणां क्रमबोधिका। अंगानि प्रधानानि च यादृशक्रमेणानुष्ठेयानि तादृशक्रमेणैव बोधयति। एतस्य सम्यक् उपस्थितौ अप्रमादं प्रयोगमनुष्ठापयितुं शक्यते। पूर्वप्रयोगमात्रं विद्यतेऽत्र। अपर-प्रयोगबोधिककारिका पूर्वमुक्ता । सूत्रेऽनुक्तानां नान्दीपुण्याहाङ्कुरादीनामपि प्रयोगं बोधयति। एकदेशाग्नौ कृत्स्नाग्नौ च क्रियमाणानि। पुण्याहनान्दी प्रतिसराणां करण कालः। अग्निनामधेयानि। इत्यादिकमत्रैव बोद्धुं शक्यते। त्रिंशत् खण्डात्मिकैषा। रचयितृनामनोपलभ्यते। शाट्यायनकारिकेति समाख्याबलात् शाट्यायन इति कश्चित् पण्डितः कर्तेति ज्ञायते। खादिरगृह्यानुसारित्वादस्माभिरनुष्ठानायोपयोज्यते। गीर्वाणमुद्रणालये पञ्चनदक्षेत्रेमुद्रापितं श्रीकृष्णस्वामि श्रौतिमहानुभावैः ।

## ।। शय्याप्रयोगः ।।

शय्याप्रयोगोनामकश्चिद्ग्रन्थविशेषः दक्षिणभारते प्रथते। सच गृह्यसूत्र रुद्रस्कन्द वृत्ति वामनकारिकादिप्रामाणिक-ग्रन्थ नुसारेणानुष्ठापयितॄणाम्महते उपकाराय भवति। नान्दी श्राद्धप्रयोगः प्रथमम्, परस्तात् उदकशान्त्यादिकर्माणि कर्मणा-मङ्गभूतानि। प्रधानानि च जातकर्मादीनि व्रताष्टकपर्यन्तानि विशदतया बोधयति। उपनयनादिमुख्यकालः गौणकालः तदति-क्रमे व्रात्यतेत्यादिकं स्मृत्यनुसारेण बोधयति। अनन्तरं गृह्योक्तकाम्यकर्मणां प्रयोगः अनुष्ठानोपयोगी सविस्तरं प्रकाश्यते सन्ध्यामाध्याह्निकप्रयोगश्च। अपरकर्माणि सापिण्ड्यन्तानिगर्भिणी प्रसूतिक संस्करादि प्रतीकग्रहणं विनामन्त्रान् स्पष्टमुदीर्य बोधयति। अन्तेग्रहयज्ञाख्यः नवग्रहाराधनप्रयोगः एवं पूर्यते। स्मार्ततन्त्र-सुधानिध्यादि प्रयोगाणाम्मूलमिदमेव। अन्तेदानश्लोकाः विद्यन्ते। कर्ताकोवेति न ज्ञायते। शय्याप्रयोग इति समाख्यया शय्याग्रामाभिजनः कश्चिदिति अनुमातुं शक्यते। ताळपत्रमयं वर्तते नैतावन्मुद्रणामलभत ।।

## ।। स्मार्ततन्त्रसुधानिधिः ।।

अयं ग्रन्थः पूर्वप्रयोगान् अपरप्रयोगांश्च पूर्वोक्तप्रामाणिक-ग्रन्थानुसारेण अनुष्ठानोपयोगितया सम्यग्बोधयति। दाक्षि-

णात्याः प्रायेणेममेवग्रन्थमनुसरन्तः स्वकार्याणि कुर्वन्ति। वरहुरुग्रामाभिजन श्रीलक्ष्मण श्रौतिमहाशयैः संपाद्यमुद्रापितं पंचनदक्षेत्रस्थ ब्रह्मानन्दमुद्राक्षरशालायाम् अष्टषष्टेः वत्सरेभ्यः पूर्वम्। इदानीं विरळ एव ग्रन्थोऽयम्।

"यज्ञेश्वरं विभुंदेवं यज्ञानां फल दायिनम्।
शङ्करं पार्वतीनाथं नौमिसर्वार्थसिद्धये॥
नमामि खादिराचार्यं मखस्वामि महागुरुम्।
रुद्रस्कन्दं महात्मानं सर्वसत्कर्म सिद्धये॥
श्रौतज्ञं सामवेदस्य स्मार्त लक्षणपारगम्।

इत्यादिनास्वीयवंशप्रख्यातिं स्वतातपादानामाचारज्ञानातिशयादिकमभिधाय तदनुग्रहेण रचितमिदं।

लक्ष्मणश्रौतिना व्यक्तं स्मार्ततन्त्रसुधानिधिः।
सामगानां सुखार्थाय प्रयोगः क्रियतेऽधुना॥

इति विनीतिप्रदर्शन पुरस्सरं प्रारभ्यते।

मन्त्र ब्राह्मण सूत्र गृह्य परिशिष्ट सायणाचार्यमखस्वामि रुद्रस्कन्द वामन शयारु प्रयोगपारिजात श्रीनिवास दीक्षितीय प्रयोगमणिदर्पण धर्मशास्त्रादीनि समस्तानि यथामति यथा श्रुतं मुहुर्मुहुर्विमृश्य छन्दोगानां बालानामपि सम्यगवबोधनार्थं खादिरगौतमसूत्रोक्तानां कर्मणां प्रयोग उच्यते। इति प्रारंभः।

विलम्बिनामके वर्षे भौमवारे शुभे दिने ।
वृषभेमासिहस्तर्क्षे शुक्लपुण्यदशमीतिथौ ॥
श्रीकृष्णस्वामि पुत्रेण पंचनदनिवासिना ।
प्रणीतः श्रीलक्ष्मणेन स्मार्ततन्त्रसुधानिधिः ।
इति समाप्तिर्दृश्यते ॥ मुद्रापितमिदानींनोपलभ्यते ॥

॥ प्रयोग कुसुमावलिः ॥

अयं छन्दोगानां पूर्वापरप्रयोगान् व्यनक्ति । विवाहादि तत्तत्प्रयोगारंभात् पूर्वं कारिकाः विलिख्य मुद्रापितमिति महत उपकाराय भवति । अयं ग्रन्थः श्रीमदप्पय्यदीक्षित वंश्यैः श्रीस्वामिशास्त्रिवर्यैर्वेदशास्त्रसंपन्नैस्संपाद्यमुद्रापितं प्रमाथि-संवत्सरेकुम्भघोणे ।

॥ तत्रादावारंभः ॥

मरकतवल्याश्लिष्टं मार्गसहायं सुरद्रुमं नमताम् ।
कुलदैवतमस्माकं कमाराध्यं श्रयेऽध्वरेशानम् ॥
सूत्र भाष्य प्रयोगादीन् परिशील्ययथामति ।
पूर्वाचार्यानुरोधेन छन्दोगहित काम्यया ।
बालाम्बा जननी यस्य वैद्यनाथाध्वरीपिता ।
भ्राता पितामहश्चापि यज्ञेश्वरमखीसुधीः ।

अप्पय्याध्वरिवंश्येन ग्रथितास्वामिशास्त्रिणा ।

छन्दोगीयस्मार्त कर्म प्रयोग कुसुमावलिः ।

अयंग्रन्थः पूर्वोत्तर भागद्वयात्मनारचितः । पूर्वभागे तत्तत्कर्मणामारंभात्पूर्वं तत्तत्कारिकाः, पुत्र प्रतिग्रहषष्ट्यब्द पूर्तिशान्ति वास्तु होम दर्शतर्पण ब्रह्मयज्ञादयः प्रयोगविशेषाः संकीर्णसामान्यधर्मशास्त्रवचनानि इत्यादयः लक्ष्मण श्रौति विरचित प्रयोगापेक्षया अधिकतया संग्रथिताः । उत्तर भागेच अपरप्रयोग क्रमे गर्भिणी सूतिकारजस्वला कन्या बालादि संस्कार प्रयोगः, नवग्रहमखप्रयोगः, सप्तविंशति नक्षत्राणां सामवेदोक्तमन्त्राः, क्षेत्र पिण्डतर्पण मन्त्राः संकीर्णविश्यकवचनानि चाधिकतया वर्तन्ते ।

अतः समेषां सामगानां महत उपकाराय भवत्ययंग्रंथः । अयमपि नोपलभ्यतेऽधुना ।

॥ सामगाह्निकसंग्रहः ॥

अयमपि श्रीस्वामि शास्त्रिभिरेव संग्रथितः । सुप्तोत्थितस्य प्रातः स्मरणमारभ्य रात्रौप्रथम यामशयनपर्यन्तं अवश्यानुष्ठेयान् कर्मविशेषान् सम्यक् विशदयत्ययं ग्रन्थः । त्रिशिष्यसंन्ध्या वन्दनादि प्रयोगं, स्नानभेदं, समुद्रस्नानविधिं, उपाकर्मोत्सर्जन-

प्रयोगं च सविस्तरं विशदयति । श्रीरङ्गस्थवाणीविलासमुद्रणालये मुद्रापितं द्वादशवर्षेभ्यः पूर्वम् ।

॥ सामप्रियं वामदेवं सामिसोम विभूषणम् ॥
ब्राह्मणान् सामगान् वन्दे गुरूंश्च ज्ञानसिद्धये ॥

इत्यारभ्य प्रवृत्तोऽयं ग्रन्थः । अन्ते शताभिषेक प्रयोगो-मुद्रितः सविस्तरः ॥ अयमुपलभ्यत इदानीम् ॥

॥ ग्रन्थसारशिक्षा ॥

ग्रन्थसारशिक्षाख्योऽयं ग्रन्थः छलाक्षरपरिज्ञानायगणनीयानां विषयाणां संग्रहेणश्लोकरूपेण प्रतिपादकः ।

ग्रन्थसार इति ख्यातः सारभूतः प्रवर्तते ।
योदीर्घपर्वमात्राणां ज्ञापकस्साम्नि साम्नि च ॥
दीर्घाक्षराणि प्रथमं विरामाः पर्वणामथ ।
ततो मात्राश्च गृह्यन्ते तदन्ते वाक् छलाक्षरम् ॥

इत्यारभ्य मात्राशब्दस्यार्थः छलाक्षरे कस्य ग्रहणं कस्य परित्यागः ऊहरहस्ययोः छलाक्षराय कानि गृह्यन्ते, छलाक्षरशब्दार्थः क इत्यादिनिर्णीय अन्ते ॥

भारद्वाज नृसिंहेन विचार्य च यथामति ।
सारं छलार्णयोरित्थं परिभाषा प्रकीर्तिता ॥

इति श्लोकेन पूर्यते । अनेन नृसिंहाभिधः कर्तेति ज्ञायते । ग्रन्थोऽयमर्वाचीनः प्राचीन कोशेषु सर्वानुक्रमण्याश्चानुपलंभात् ।

॥ सामवेद सर्वानुक्रमणिका ॥

सामवेदीयानांग्रन्थानां स्वरूपतः विषयतश्च प्रकाशिका ।
सप्तगानानि वै साम्नां ब्राह्मणा अष्टवै स्मृताः ।
दशसूत्राणि सप्तापि दश लक्षणमिष्यते ॥
तत एषां स्वरूपं तु कथ्यतेऽत्र समासतः ।
गायत्रं प्रथमं गानं आग्नेयं तु द्वितीयकम् ॥
तृतीय मैन्द्रं गानं स्यात् पावमानं चतुर्थकम् ।
अर्कद्वंद्व व्रतानीति त्रीणि पर्वाणि पंचमम् ।
ततः परं शुक्रियंस्यान्महानाम्नी ततः परम् ॥
एतानि सप्तगानानि प्रकृतेः कथितानि च ।
अथवा । आग्नेयं प्रथमं तु स्यात् ऐन्द्रं स्यात्तु द्वितीयकम् ।
तृतीयं पावमानाख्यं चतुर्थं छान्दसम्मतम् ॥
शुक्रियं पंचमं प्रोक्तं षष्ठ मूहाख्यमेवतु ।
सप्तमं तु रहस्यं स्यात् इत्येतत्सामगानकम् ॥

इति केषांचित् मतम् ।

अष्टौ हि ब्राह्मणग्रन्थाः प्रौढं ब्राह्मणमादिमम् ।
षड्विंशाख्यं द्वितीयं स्यात् ततस्सामविधानकम् ।

आर्षेयं देवताध्यायो भवेदुपनिषत्ततः ।
संहितोपनिषद्वंशो ग्रन्था अष्टावितीरिताः ॥

इत्यष्ट ब्राह्मणानि ।

द्राह्यायणमनुपदं निदानं कल्प मेवच ।
उपग्रन्थाश्च क्षुद्राश्च तन्दा (ताण्डय) लक्षणमेव च ॥
सूत्रं पंचविधं ज्ञेयं कल्पानु पदमेवच ।
अनुस्तोत्रं तु विज्ञेयं सूत्राणां दशकं स्मृतम् ॥

इति श्रौतसूत्राणिदश ।

गृह्यंगायत्रमृक्तन्त्रं सामतन्त्रं च पुष्पकम् ।
ततोवग्रहंच हित वाक्यं स्तोभानुसंहरम् ॥
मात्रार्चिकेछलं चैव पाणिनीयं च शैक्षकम् ।
नारदीयं गौतमीयं लोमशीयमतः परम् ॥
अग्र आयानुदात्तं च रावणीयं ततः परम् ।
परिशिष्टे लक्षणेऽस्मिन् वनसंख्याप्रकीर्तिता ।

इति सप्तदशलक्षणानि ।

ऋग्दीपिकातथा ऋच्यध्यूढं सामांकमेवच ।
ऋच्युद्धारस्तथा पद्यो परी ऋचनिघातकम् ॥
छन्दोमय्युपनिदानं तथा पैङ्गल नागकम् ।
नैगाख्यं लघु ऋक्तन्त्रं चन्द्रिकाख्यं स्वरस्यतु ।

दर्दकः प्रतिस्तोत्रीयं विदुरेवं हि सूरयः ।
ऋग्लक्षणमिति प्रोक्तं राशिसंख्या विधानतः ।
सूची चतुर्थानित्यानि नमनं धारिलक्षणम् ।
ह्स्तलक्षणमित्येव प्रकृतेस्तु लघोस्तथा ॥
ऊहस्यतु लघूहस्य चैषां साम्नां प्रकाशिका ।
सामोपर्यक संज्ञच प्रकृत्यूह्यस्य लक्षणम् ॥
संकृतं च तथैवानुस्वारवै कृतमेवच ॥
स्वर भक्तिः कर्षणं प्रग्रथन त्रयमेवच ॥
संपत्यस्तोभ्यति हृतं स्तोभोच्चारकमेव च ।
वेयगामलक्षणं गीति कल्पं चैव ततः परम् ॥
चरणानां व्यूहमिति लक्षणं पारिभाषिकम् ।
फलाख्यं परिशिष्टर्षि देवानां क्रमकारिका ॥
पंचविंशति संख्याथ ब्राह्मणानांच सूचिका ।
सूत्र लक्षण सूचिभ्या माहत्म्यांकथनं स्मृतम् ॥
सर्वानुक्रमणी नाम इयं ग्रथस्य निर्मिता ।
श्रौतस्मार्त प्रयोगाणां ग्रन्थाख्या सम्यगीरिता ॥

इतः परं मूलग्रन्थानां प्रयोगग्रन्थानां च ग्रन्थ संख्या अध्यायतः खण्डतश्च, ग्रन्थ कर्तु र्नाम क्वचित् खण्डानां प्रतीकग्रहणं व्याख्यातृ नाम इत्यादि विशदीकृतम् ।

यथा ॥ सामतन्त्रं प्रवक्ष्यामि सुखार्थं साम वेदिनाम् ।
औदव्रजि कृतं सूक्ष्मं साम गानां सुखावहम् ।
तत्र प्रपाठकाः प्रोक्तास्तिथि संख्यामुनेर्मताः ।
खण्डाछमाया विज्ञेयाश्छन्दोगैः कटपादयः ।
प्रथमे चतुरीयेच षष्ठके सप्तमे तथा
त्रयोदशप्रपाठके रुद्रसंख्या मुनेर्मताः ।
द्वितीये च तृतीये च पंचमेदशमेतथा ॥
अष्टमेकादशे ब्रह्मन् दशसंख्यास्तु खण्डकाः ।
नवमे द्वादशेचैव नवकामुनि सत्तमाः ।
चतुर्दशप्रपाठके खण्डा आदित्यसंज्ञकाः ।
खण्डास्त्रयोदश प्रोक्ता स्तिथिसंख्याप्रपाठके ॥

अत्र खण्डाः, छमाया, इति शब्देन सप्त पंचाशदुत्तरशतं इत्यर्थोलभ्यते वर्णानां वामतः इति न्यायेन या इति एक संख्या मा इति पंचसंख्या छ इति सप्त संख्या १५७ इति कटपयादि संख्यया निर्दिष्टाः । एवं ऋक्तन्त्र फुल्लसूत्र शिक्षादीनां ग्रन्थ संख्याप्रदर्शिता । लाहूर नगरे मुद्रापित ( १९३३ वर्षे ) पुस्तकादानीतम् अत्र सामवेदिनांकौथुम-शाखीयानां मन्त्र ब्राह्मण श्रौतसूत्र गृह्य सूत्र धर्म सूत्र प्रातिशाख्यशिक्षा मात्रालक्षणछलाक्षरग्रन्थाः कतीति विशदतया ज्ञायते इति ज्ञातव्यं सामगैस्सर्वैः ॥

॥ लाट्यायन गोभिलसूत्रे ॥

उत्तरदेशीयाः कौथुमशाखावलम्बिन एव द्राह्यायण श्रौतसूत्रस्थाने लाट्यायन श्रौतसूत्रम्, खादिरगृह्यस्थाने गोभिलगृह्यं अन्यच्च छन्दोगपरिशिष्टं कर्मप्रदीपापर नामधेयम्, गृह्यासंग्रहम्, वासिष्ठ श्राद्धकल्पम्, स्नानसन्ध्यासूत्राणि, वृषोत्सर्गविधिं च प्रमाणतया श्रौतस्मार्तकर्मसूपयुञ्जते।

द्विपंचाशदिमेग्रन्थाश्शाखायाः कौथुमेरिह।
प्रोक्तास्सामोदधीयस्मात् श्रौतेस्मार्ते सुनिश्चिताः॥

इति मन्त्र ब्राह्मणात्मकमूलग्रन्थानां श्रौतस्मार्तसूत्राणाम्, लक्षणग्रन्थानां च परिगणितासंख्या द्विपञ्चाशत् इति तेषां संप्रदायः। तत्र लाट्यायन श्रौतसूत्रं समग्रं मुद्रापितम्, गोभिलीयं गृह्यसूत्रमपि नारायणभट्टोपाध्यायभाष्यसहितं मुद्रापितम्। प्रायशः बोधायनादि सूत्राणां मूलं तत्तत्प्रकरणे संकलय्य टिप्पण्यपि चिन्तामणिभट्टाचार्येण विस्तरशः कृतामुद्रापितात्र। चन्द्रकान्ततर्कालङ्कार इति कश्चन पण्डितवरेण्यः व्याख्यातवान् इदं। तदपिमुद्रापितम्। गोभिलीयसूत्रं खादिरसूत्रस्थानां पदार्थानां अधिकानां च व्यञ्जकम्॥

"जैमिनीय शाखावलम्बिनस्तु आर्चिकगानाख्य मन्त्रभागं कौथुमशाखातः विलक्षणस्वरयोगेन गायन्ति। तेषां

ब्राह्मणं जैमिनीय ब्राह्मणमिति, श्रौतगृह्यसूत्रमपि जैमिनीयमिति विभिन्नतया वर्तते । जैमिनीयब्राह्मणं ४० अध्यायाः गृह्यसूत्र मध्यायद्वयात्मकम् । तत्र पाकयज्ञतन्त्रम्, पुंसवन सीमन्ताद्युप-नयनान्तम् । नान्दीप्रयोगः, सन्ध्योपासनम्, उपाकर्मोत्सर्ग-प्रयोगः, वेदव्रतानां उपक्रमविसर्गौ समावर्तनम्, विवाहः, औपासन वैश्वदेवौ, इति प्रथमाध्याये । श्राद्धम्, अष्टका, और्ध्वदैहिकं अद्भुतशान्तिः ग्रहशान्तिः, अनश्नत्संहिताकल्पः, इति द्वितीयाध्याये च विषयाः । खादिरेऽविद्यमानः अनश्नत् संहिताकल्पः इति संहितापारायण विधिः सेतिकर्तव्यताको विहितः पापक्षयार्थत्वेन ।

अग्निं प्रतिष्ठाप्याघारावाज्यभागौहुत्वा अग्नयेसोमाय रुद्राय इत्यादि श्रावणहोमवत् हुत्वा उत्तर तन्त्रं समाप्य ओं पूर्वा व्याहृतीः सावित्रीं च गीत्वा सोमंराजानं गीत्वा सन्ततमधीयीत, विरामे एवं होमः । इति प्रयोगः ।

॥ राणायनशाखा ॥

राणायनीयशाखाध्यायिन इति केचिद्वदन्ति । तेषां कौथुमशाखातोभिन्नतया मन्त्रभागो ब्राह्मणभागो वा प्राति-शाख्यादिकं वा न किंचिदपिग्रन्थान्तरं विद्यत इति विच्छिन्न

संप्रदायाः स्युः। परं ह उ इति स्थाने हावू इति वदन्ति। शाट्यायनबाल्लविशाखयोः ब्राह्मणग्रन्थः उत्तरदेशे वर्तत इति गौतमशाखीया अपि वर्तन्त इति ज्ञायते। परमतीव-विरळाः। एवं सामवेदे उपलभ्यमानान् ग्रन्थानधिकृत्ययथो-पलम्भं यथामतिविलासं च रचितोऽयंग्रन्थः। गुणैकप्रवणैः सामलक्षणचणैः श्रौतस्मार्तविचक्षणैश्च सम्यक् परिशील्यसाध्व-साधुविषयनिरूपणेन सफलयतु मदीयंपरिश्रममिति संप्रार्थये॥

सामजालजलाकीर्णं छन्दः कल्लोल संकुलम्।
तन्त्रग्राहान्वितं वन्दे सामवेदमहार्णवम्॥
सप्ताकार विभक्तिरम्य तनुमान् सप्तस्वरद्वीपवान्।
नानारूपमखाख्य रत्ननिलयोदेवर्ष्यनेकाश्रयः।
कल्पेन्दूदय वर्धमानविभवश्छन्दोनदीपूरितः
स्तोभोत्तुङ्ग तरङ्गवानवतुवस्सामागमांभोनिधिः॥
अप्पय्य दीक्षितेन्द्राणां नीलकण्ठमखीसुतः।
यज्ञेश्वरमखीतस्य नीलकण्ठाख्यदीक्षितः॥
तज्ञोयज्ञेशयज्वातु रामनाथाख्यदीक्षितः।
तज्ञो वेङ्कटसुब्बाख्यो नीलकण्ठश्च तत्सुतः।
महालिंगाख्य यज्वा च वैद्यनाथाख्य दीक्षितः।
तत्सुतः श्रीमहालिंग दीक्षितस्साममर्मवित्॥

तदात्मजोरामनाथस्सामलक्षण कोविदः ।
विद्यानाथपति धर्मज्ञ इत्यादिबिरुदं वहन् ॥
दीक्षितेन्द्रात् द्वादशोऽयमद्वैत ज्ञाननिष्ठितः ।
सामाम्भोधेस्समुद्धृत्य सारसर्वस्वमर्पयत् ॥
पराशक्तेः प्रसादेन कटाक्षेण च सद्गुरोः ।
छन्दोगानां हितार्थाय जीयादाचन्द्रतारकम् ॥

॥ ओं तत्सत् ॥

यत्प्रपितामहपिता साक्षादप्पय्ययज्वनो नप्ता ।
तन्नप्तृसूनुनेदं संग्रथितं सामसारसर्वस्वम् ॥

अप्पय्य दीक्षितेन्द्राणां वंशावलिः। कुलकूटस्थः वक्षस्थलाचार्य दीक्षितः तत्पुत्रः नृसिंहाचार्य दीक्षितः तत्पुत्रः रंगराजाध्वरी ।

| | |
|---|---|
| रङ्गराजाध्वरि पुत्रः चतुरधि कशत प्रबन्ध निर्माण चातुरी धुरीणः श्रीमप्पय्य दीक्षितेन्द्रः ॥१॥ | सर्वज्ञकल्पः तस्यैकादशपुत्राः द्वे भार्ये- तत्रज्येष्ठः यज्ञेश्वर दीक्षितः ॥ ३ ॥ |
| विनायक सुब्रह्मण्य शर्मा तस्य कुंमारास्त्रयः ज्येष्ठः नीलकण्ठ दीक्षितः ॥२॥ | तत् पुत्रः नीलकण्ड दीक्षितः ॥४॥ तस्यज्येष्ठः रघुपति दीक्षितः, कनिष्ठः । |

यज्ञेश्वर दीक्षितः ॥ ५ ॥
दक्षिणामूर्ति कृतपश्चा-
श्वरोपदेशः
तस्य द्वौ पुत्रौ ज्येष्ठस्य
पौत्रानन्तरं सन्तति
र्नास्ति । कनिष्ठः
रामनाथ दीक्षितः ॥ ६ ॥

तत्पुत्रः वेङ्कटसुब्रह्मण्य
दीक्षितः ॥ ७ ॥

तस्य त्रयः पुत्राः
तत्र ज्येष्ठः
नीलकण्ठदीक्षितः ॥ ८ ॥

तस्य त्रयः तत्र ज्येष्ठः
महालिङ्ग दीक्षितः ॥ ९ ॥

तस्य चत्वारः तत्र ज्येष्ठः
वैद्यनाथदीक्षितः ॥ १० ॥

तस्य पुत्रः
महालिङ्गदिक्षितः ॥ ११ ॥

तस्य द्वौ तत्र ज्येष्ठः
रामनाथ दीक्षितः ॥ १२ ॥

सामसारसर्वस्व, भारत
स्थलयात्रादि प्रबन्धकृत
तदनुजः कृष्णमूर्ति
दीक्षितः मायूरवासी तस्य
पुत्रौ वैद्यनाथरामेशौ ।
तस्य पञ्चपुत्राः
पट्टाभिराम-गोपाल
विश्वनाथ-सुब्रह्मण्य-
सदाशिवाः ।
ज्येष्ठस्य पञ्चसुताः
भास्कर-चन्द्रशेखरोमा
शङ्कर-शिवकुमारराजारामाः
नवमस्य द्वितीयः नील-
कण्ठ दिक्षितः, तत्पुत्रः राजु-
दीक्षितः, तत्पुत्रः नीलकण्ठः
तत्सुतः कृष्णः
तृतीयस्सांबशिवदीक्षित
तस्य सन्ततिर्नास्ति-चतुर्थ

मापति दीक्षितः। तस्यद्वौ-सुब्रह्मण्य-रामनाथदीक्षितौ । ज्येष्ठस्य त्रयः महालिङ्गवैद्य-नाथाख्या स्वामिनः पूर्वयो-स्सन्ततिर्नास्ति । कनिष्ठ-स्यास्ति। अष्टमस्य द्वितीयः यज्ञेश्वर दीक्षितः तस्य सन्तति र्नास्ति। तृतीयः शेषाद्रिदीक्षितः तत्पुत्रः नीलकण्ठ दीक्षितः तत्पुत्रः सुन्दर दीक्षितः नत्तम् - तत्पुत्रः नीलकण्ठः तस्य चत्वारः पुत्राः

सप्तमस्य तृतीयः यज्ञेश्वरदीक्षितः तस्य त्रयः पुत्राः तत्र ज्येष्ठः साम्बशिवदीक्षितः - तत्पुत्रः यज्ञस्वामिदीक्षितः- तत्पुत्राः नीलकण्ठसुब्रह्मण्य रामस्वामिनः - द्वितीयः नीलकण्ठ दीक्षितः तत्पुत्रः रामनाथदीक्षितः तत्सुतः वैद्यनाथदीक्षितः तस्य त्रयः पुत्राः। तृतीयः वैद्यनाथ दीक्षितः तस्य त्रयः पुत्राः यज्ञस्वामि नीलकण्ठ सुब्रह्मण्य दीक्षिताः। अत्र ज्येष्ठस्य पुत्रः सुन्दरदीक्षितः तस्य द्वौ कुप्पुस्वामि रमणि नामधेयौ - ज्याय-सस्त्रयः पुत्राः। द्वितीयस्य नीलकण्ठापरनामधेमस्य स्वामि शास्त्रिणः पुत्रः विश्वनाथः तस्य चत्वारः पुत्राः। तृतीयस्य द्वौ शङ्कररामाख्यौ। शङ्करस्य चत्वारः पुत्राः रामस्य द्वौ पुत्रौ।

परिधाविनामकेऽब्दे जन्माष्टम्यां गुरोश्च शुभवारे।
कौथुमशाखीयानां पूर्तिंचागात्साम गारसर्वस्वम् ॥

The Veda is the bedrock on which our religion rests. Bhagavan Veda Vyasa divided the Veda into four branches: Rik, Yajus, Sama and Atharvan. Of these, Sama has thousand sub-branches or Sakhas (vide III Khanda of Charana Vyuha Parisishtam.) Some Sakhas were, it is there stated, destroyed by Indra, because. they were chanted during prohibited periods. Patanjali also speaks of a thousand Sakhas. He speaks at one place of seven sakhas:- Ranayaneeyam, Satyamugram. Kaleyam, Mahakaleyam, Langalayanam, Sardoolam and Kowthuma, and elsewhere mentions Shatyayaṇeeyam, Kalvalam, Mahakalvalam, Langalam, Gowtameeyam and Jaimineeyam. Of these, Kowthuma sakha obtains in Dravidadesa; Jaimineeyam in Kerala, Ranayaneeyam in Maharashtra, making only a total of three extant sakhas of Sama Veda.

The Acharyas of the sakhas number thirteen: They are: Ranayani, Satyamugri, Durvasa, Bhaguri, Kaurundi, Gaulgulavi, Oupamanyavar, Dharala, Gargi Savarni, Varshaganyar, Kuthumi, Salihotra and Jaimini. Jaimini, according to slo. 74, Chapter VI

Skandha 12 of Srimad Bhagavatam intiated his son Sumantu and his grandson Sukarma in Sama Veda, teaching each of them one *Samhitha.* Sukarama had three disciples : Hiranyanabhakausalya,Paushpinji,and the Bramhavith Avantya. Their disciples can be found in the north and east of India - so says the Bhagavata. And the Vishnupurana also says so. As Jaimini was Bhagavan Vyasa's disciple, the division into various Sakhas probably took place after the period of Veda Vyasa. The majority of the Sama vedins today seems to be of Kauthuma sakha group, though there are a few Jaimineeya sakha adhyayis in Kerala and some other areas.

Kauthuma sakha consists of two sections: Mantras and Brahmanas. The mantra section is to be found both in the form of Archika and in the form of Gana. Archika can be subdivided into Purva Archikam and Uttara Archikam. Prakriti samas link up with Purva Archikam and Oohagana with Uttara Archikam. Purva Archikam is also referred to as Chanda Archikam. Chanda Archikam breaks up into seven prapatakas, each consisting of ten kandas (or dasatis). The seventh prapathaka is the Rik of Aruna Sama and including Mahanamni. We have seven pra-

patakas called Chandah Padam for Chandah Archikam.

*Uttara Archikam* breaks up into nine prapatakas with 22 adhyayas. Each adhyaya consists of many dasatis, unlike Purva Archika. The Padapata of this is in nine prapatakas (Vide the table on page 9 of this book).

For sthobha padas not covered by Rik, we have separate padapata, of two prapatakas with 25 dasatis (more fully dealt with in Stobhanusamharam).

There are 400 suktas, in Uttara Archika, each having 1 to 12 Riks. (Vide the table on page 10.) The total number of Riks in Sama Veda is thus 1 875 and for these we have valuable commentaries by Sayania, Bharataswami and Madhava.

The Gana section of this veda breaks up into two parts, Prakriti and Ooham. They are also referred to as Prakriti Aranyaka, Ooha and Rahasyam, the last term being used in the original texts for the Aranyaka portion. That part of Prakriti which can be chanted inside a village is referred to as Gramageya and that which can be chanted only in an Aranya as Aranyageyam. The Vikriti of Gramage-

yam is called Ooham and that of Aranya-geyam as Rahasyam. This is also called Ooha-rahasyam.

Sama gana has, principally, seven swaras, referred to also as Ratantara, Brihat and Vamadevyam, out of which has developed the sangita sastra. Gandharva Veda on which sangita rests is spoken of also as an Upaveda of Sama Veda. We shall expand the swaras later in the section entitled Narada Siksha Vivarana. Prakrit Samas invariably conform to Archika: Purvarchika riks chanted are Prakriti and one sama is chanted in one rik and also several Samas. They are divided into seven ganas : (vide page 12 Gayatram....... Katitanicha)

1. Gayatra, 2. Agneyam, 3. Aindhram, 4. Pavamanam, 5. Arkaparva Dvandhvaparva Vrataparva, 6. Sukriya, 7. Mahanamni.

Some divide the ganas thus : (1) Agneya (2) Aindhra (3)Pavamana (4) Aranyaka (5) Sukriya (6) Ooha (7) Rahasyam. But this does not seem proper. Ooha rahasyam cannot be called Prakriti. Sarvanukramani speaks of 7 ganas, 8 Brahmanas, 10 sutras, 17 Lakshanas, all of them original texts. A Vikriti like Ooha rahasya does not quite belong here, it seems to me.

*Seven Gānas*: The first of these is Gayatram. The basis is the rik.

I. *Tath Savitu*: (6 Prapatakas, 13th chapter of Uttara Archika) The gana of this is set out in the Devatadhyaya Brahmana. The lakshanas of this gana are set out in Arsheya Brahmana Gayatra' Vidana and Drahyayana Sutra. Gayatragana is used in stotras like Bahishpavamanam and in rituals like Brahmayagnam, Upakarma and Upanayana Vrata etc.

II The second is *Agneya*. The ganas here concern Agni. Hence the name.

III. The third is *Aindhram*. We have Bahusami, Ekasami, Brhati, Trishtubh, Anushtubh, Indrapuchcham, in this. Bahusami is so called because many Samas in each rik are chanted thus, while Ekasami is so called because only one Sama in each rik is chanted thus. Brhati is the name given to Samas in Brhati Chandas, and anushtubh and Trishtubh are also named after the chandas of the Samas. Indrapuchcham is not named after any specific chandas: The first two khandas are in Ushnikchandas. the 3rd in Kakupchandas, 4th, 5th, 6th, in Pankthi chandas, 7th, 8th in Gayatri Pankthi, Trishtubh and 9th in Jagati. Ashti and Athyashti. The Devata too is not uniform.

Hence the name does not derive either from the chandas or the Devata. The remnant of Aindhra is called Indrapuchcham, perhaps on the analogy of the practice of calling the concluding rituals of a yagnapuchcham.

IV. *Pavamanam*: The word here means the Adhishtana Devata of Soma Rasa. As the Samas in this gana chant about Soma, this is called Pavamana.

V. *Arkaparva*: Along with Dwandvaparva and Vrataparva is the fifth gana. In this there are a large number of Samas, named Arka. The Samas in the Dwandva come in doublets and hence the name. Those in the Vrataparva bear the name Vrata.

VI. *Sukriyam*: The Samas in this relate to Surya. Sukra is one of the names of Agni who is Light. Since Surya is also Light, the term Sukra is used here also for Surya. The constituent organs of Surya give their name to the Samas in this ganas. They are called Sirassama, Chakshussama, srotrasama, Vaksama, Jihva Sama, Oorusamani, puchchasama and Adityathama. Hence the name Sukriyam.

VII. *Mahanamni*: The Samas in this gana bear this name. These Samas altogether, with the seven ganas are called Prakriti and cover

17 prapatakas ending with Pavamana, 6 in the Aranyaka ending with Sukriyam-totalling 23 in all. Prakriti Samas total upto 84 khandas. See table p. 15. In the Aranyagana we have the Udhvayama and Bharunda Samas as a kind of appendix.

*Oohaganam*: This involves the chanting of the Samas in Prakriti in terms of the riks of uttara archika. Samas in Prakriti chanted in each rik yield one Sama per rik. In Ooha, the Samas are chanted in terms of three riks ordinarily and we have therefore three Samas per rik, though single Samas also exist: These Samas are used in yagnas like Agnishtoma. Oohaganam depends on the procedural Karma of a yagna. This is set out in Mahabrahmanam: It is in conformity with this that uttara Archikam proceeds. Samas in Prakriti are '*anadi*', beginningless. These Samas are sorted out in Uttara Archikam and assigned to specific yagnas as prescribed in the Brahmana. When chanted, the rik may be in short chandas. When the Sama gana is chanted in the long Chandas, according to the rule laid down by the Brahmanas, it takes on the 36 lettered *Brahatsama* of Brahati chandas. It is prescribed that it should be chanted in terms of the 64 lettered *Ashti Ghandas*. The chanting has to be governed carefully by close attention to the lak-

shanas and Brahmanas, and avoiding errors of letters or swaras: If errors are committed, the result may be injurious to the Yajamana's (sacrifier) life, children and wealth. Taking due account of our limitations, in their farsighted kindliness for us, our elders have laid down regulations about which Sama should be chanted in which rik and also required of us that Ooha should be regarded as esoteric and secret, thus guarding its purity and propriety. This has now been set out in a book and Mimamsakas, on this ground regard Ooham as man-made (Paurusheyam). But thc gana and the riks are not man-made. It is their combination that is man-made. Indeed the Nidana Sutrakara regards Ooha itself as *Apaurusheyam*. In Brahma yagna and in parayana relating to prayaschitta rituals, Ooharahasyams are not utilized by our elders. Gramageya samas which fall into Ooha section are called Ooham and Aranyageya samas are referred to as Rahasyam. These Ooha and Rahasyam are each subdivided into seven parts. Each part is called a tantram. They are *Dasaratram*, *Samvatsaram*, *Ekaham*, *Aheenam*, *Satram*, *Prayaschittam* and *Kshudram*. This division conforms to the division of the yagnas

1. Excluding the first day, the last day prayaneeyam, Udayaneeyam of the yagna

Dwadasaratra, the intervening ten days are to be covered by stotras in prescribed order. Hence this is called Dasaratram. The first two Vimsas of these, according to the Brahmana, are to be chanted in yagnas like Agnishtoma. Even so, the name seems apt.

2. *Samvatsaram* As these relate to yagnas which are performed over the year, the name Samvatsaram is given to them.

3. *Ekaham* is the name given to Samas which are chanted at yagnas of a single day's duration.

4. *Aheenam* is so called because the Samas in this are used in Yagnas lasting for many days. A single person may perform this yagna; many persons may also do it jointly.

5 *Satram*: This is a yagna done by many yajamans and lasts for months and even years The Samas used in this yagna bear this name.

6. *Prayaschittam*: Samas chanted in remedial or corrective of errors committed in a yagna are so called.

7. *Kshudram*: This refers to Namas used in yagnas designed to destroy enemies in Abhichara Rituals.

Thus Namas chanted by three Ritviks (the man who performs yagas) are called Ooham

and Rahasyam. The three rituals-*Udgatha-Prastota*, and *Pratiharta* sit in *Sadas* at a yagna, after chanting appropriate mantras and when the Hota group calls for stotra, Stotra must be chanted, without pauses each bhakti coming close on the preceding one. (A Bhakti is the fivefold structure of Sama-prastava, Udgitha-Prathihara Upadrava and Nidhana with Omkar and Himkar added to them (This is dealt with later) (Here vide tables on 22).

## CHAPTER II

### The Brahmana Section

### The Eight Brahmanas

### Maha Brahmana.

There are eight Brahmanas in Sama Veda. They are: Praudha (Tandyam), Shadvimsam, Samavidanam, Arsheyam, Devatadhyaya, Chandogyam, Samhitopanishad and Vamsa. Praudha or Tandya (so called after Tandi Maharishi who revealed it) or Mahabrahmana is the longest of them all, consisting of 25 chapters (also called Panchavimsa Brahmanam). This concerns Somayaga exclusively. Yagnas are of various kinds-Agnihotra, Darsa Purnamasa Ishti, Agnishomiyapasu Agnishtoma etc. Agnihotra homa is done with Yajur Veda.

Ishti and pasubhandha are done with Rik and Yajur Veda. But Soma yagna is done with all three vedas, Rik, Yajus and Sama (vide Apastambha Srauta sutra) From Agnishtoma upto Viswasrujamayanam, there are 178 yagnas covered by this Brahmana. Katyayana and Apastamba in their Srauta Sutras rely chiefly on this Brahmana, and Drahyayana cites Mantras from this for various rituals.

Chapter i cotains mantras relating to Agnishtoma, Somabhakshana, Upahvana, Dakshina Pratigraha and Brahmatva sacrifices.

Chapters ii and iii deal with stomas like Truvrut. A stoma is a count of the Stotra Samas. The counting is to be done with a stick of the fig tree called Kusa, the procedure of which is laid down in Drahyayana.

Chipters iv & v deal with the yagna called Gavamayana with 361 sutyas. It lasts for 12 months. On the concluding day of the yagna when the soma juice is extracted and taken by the yajaman.

Chapters vi - ix deal with the reasons behind the names Agnishtoma Atiratram, Jyotishtoma of these yagnas prayachitta ceremonies concerning the soma plant, breakage

of the Dronakalasa or Mahavira. All these yagnas have only one sutyai.

CHAPTERS X - XV deal with the yagna called Vyudhawadasham which has 12 sutyas. It is also called ahinakratu of which, it is the Prakriti. It is also called Dwadasaratram.

CHAPTE XVI deals with single sutya yagnas like Jyoti, Gauh, Ayuh Abhijit, Viswajit.

CHAPTFR XVII covers vratyastoma and 12 other yagnas, including chaturmasya. For Varunaprakasam two sutyai, for sakamadha, three sutyai and for other two sutyai each.

CHAPTER XVIII deals with Ritapeyam and 10 other yagas including Vajapeyam and Rajasuyam. For Vyushtidwiratra two sutyai, for other one sutyai only.

CHAPTER XIX 20 Somayagnas including Rat are prescribed, each having one sutyai. The yagnas here are double Viz. Rat-Virat Udbhit-Balabhit etc.

CHAPTER XX 13 athiratras, 3 ahinas in sarvastoma, ahinas have two sutyai, other one.

CHAPTER XXI 13 ahinayagnas are dealt with, Six of them have 3 sutyai, four - 3 sutyais, three-5 sutya.

CHAPTER XXII covers 18 ahinayagnas 3-6, 7-7, 1-8, 2-9, 4-10. 1-11 sutyas. The last is

called Ekadasaratra "Paundarikam"

CHAPTER XXIII 28 ahinas. 2-13, 3-14, 4-15 5-16, 17, 18, 19 & 20 2-21 sutyas etc.

CHAPTER XXIV 20 ahinas.

CHAPTER XXV has 18 khandas: The first 12 khandas cover 12 ahinas, one Adityanamayana 361 sutyais, 2 angirasamayana, 361 sutyai, 3 drtivatavatoryana, 363 sutyai etc totalling 178 yagnas (The term 1000 year is according to Jaimini, to be construed as 1000 days).

There is no question of performance of yagnas on this scale but devout reading especially as part of Brahmayagna study of their import will be spiritually meritorious.

Sri Chinnasami Sastri has edited the Sayana Bhasaya on this great Brahmana in Chowkamba Sanskrit series.

SHADVIMSA BRAHMANA

Maha Brahmana has 25 chapters. Shadvimsa may be regarded as the 26th chapter, setting out what has not been stated in the other chapters. It has five chapters and 48 khandas:

CHAPTER I deals with the call to Subramanya i.e. the rite performed three days before the last day of Sutyahams morning and evening. The deity summoned there is hailed

as Sarvatmaswarupa: The rationale of Indra's name, the contents of Subramanya rik, the three savanas, chandas, definition, viswarupa gana, the sources of the thee vyahratisand thence the sources of the three worlds and the penitcntial rite of Rek, Yajus and Samavedas.

Chapter ii deals with rethasyadhorgana, definition of Dorganam, the upahavam that the Udgatha may do in the three savanas, pravaschitta for mischants by the Hotha, Devaritvikvarana, devayajnanaprarthana, devayagna, the site for the yagna, its Lakshanas, e.g., the need for a tank or well to the east of the site, Ahavanya, Surya having to be below the site etc.

Chapter iii Avabhruta bath Sama Abhi chara yagnas for destroying enemies Ishu, Sandamsa, Vajram and Vaisvadeva yagna for 13 days of the Satrayagna.

Chapter iv The origin of garhaptyaagni emphasis on oneself doing agnihotra rather than a ritvik, lakshana of oudumbari of yupa selection of woods like Bilva, Purasu blackwood, areca etc. for the rites, exposition of the devatas and merits of sandya devatas, Sandhya vandana, origin of swahadcvi, the gotram, akshara etc.

CHAPTER V deals with adbhuta santi prakarana covering santikarma for ominous happenings and portents of disaster to kings and peoples, earthquakes, disaster of cattle and elephants damage to fields and houses blood rain, bleeding of trees, instability images of deities in temples, smoke emerging from the horns of cattle, children being born deformed.

There is exposition here of the powers and potencies of deities and devas like Indra: (There is an edition of this Brahmana edited by Jeevananda Bhattacharya of Calcutta.) Kendriya Vidyapeeth of Tirupathi.

SAMAVIDHANA BRAHMANA

This is the third Brahmana and deals with mantras to be meditated on by persons unable to perform the major yagnas prescribed in the other two Brahmanas. The ritual for this japa is dealt with, like krichracharana, disciplinary ritual etc., It consists of 3 chapters and 25 khandas. It prescribes mantras to be chanted respectively for freedom from disease, for the birth of children, for long life, for salvation etc. Samas covering Rudram, Purushasukta, Ganapati sukta, Surahmanyasukta, arishtavarga, pavitravarga are dealt with.

CHAPTER I tells us of the sukshma rupa of this universe in Brahman before creation and of the seven swaras that respectively please

various creatures, prajapatyakrichram, Athikrichra krichra Tikrichra their fruits, agniadhana upto Darsapurnamasa, agnishtoma, ukthya, shodasi, atiratra, Vajapeya, abthoryama, dwadasaratra, gavamayana, tapachchida, sowmikachaturmasya, yagnas spread over several years and their fruits. Amrita samhita, Swargakamasomhita, Rudrasamhita, Vishnu samhita, Subrahmanya Ganapati samhita, Pitru samhita etc. Penitentiary rites for stealing a brahmana's property, Rajapratigraha, Brahmanahimsa etc are also dealt with.

Chaptfr ii tell us that life-giving, wealth giving samas should, if not commenced at thc prescribed time, be commenced on pushyanakshtra after three days fast. Satayushkamas propitiatory rites against abortion paisachadosha, danger caused by serpents, enemy activity, security on the highways during journey, samas designed togain control over persons, Raja Sannidhi and Sabha etc.

Chaptnr iii deals with mantras to be chanted for various auspicious desires like wealth, grain; Vastuhoma discovery of concealed treasure, avoiding punarjanma (ratri upasana) samas for direct vision of devas, for achieving lordship of three worlds. Brahma revealed this to Brahaspati, the latter to

Narada, and Narada to Vyasa, Jaimini and others in the guruparampara. (Edited by Satyavrata Samasrami, Calcutta Vidhyapeetha Tirupathi and by Burnell).

ARSHEYA BRAHMANA

This is the fourth Brahmana and tells of the great seers who discovered the specific prakrity sama mantras, their devatas, their metres etc., essential to the correct chanting and use of them for attaining merrit here below and above. It has three chapters. I Chapter - 28 khandas, II Chapter-25 and III-29 khandas totalling 82 khandas, making the description asitidvaya extremely appropriate in this regard

DEVATADHYAYA BRAHMANAM

This is fifth Brahmana-4 khandas. I khanda details the devatas of prakriti samas. Through Nidhanas, samas are grouped into sections for the respective devatas. Hence the name. II khanda tells of Gayatri chandas and varnas and devatas. III khanda tells of the origin of Gayatri, Ushnik, Anushtub, Brahati, Pankti, Trishtub, Jagati chandases.

IV Khanda demonstrates that Gayatri Devi is Viratswarupini, with Brahma as the head, swarga as the forehead, Surya and Chandra as eyes, Agni as the Mukha, Saraswati as tongue

